**आयमिऊणं पुव्वं, दइज्ज जइणं पढमयाए ॥ १८२५ ॥**

परिवेषणं कुर्वतो यद्यत्युष्णश्चिक्कणो वा कूरस्तत एकत्र हस्तदाहभयादपरत्र हस्ते विलग्नात् कुण्डकादिस्थितेनोदकेन स दाता पुनः पुनः 'धौत्वा' हस्तमार्द्रीकृत्य 'ददाति' परिवेषयतीत्यर्थः, साधोरप्यागतस्य तथैव यदि भिक्षां ददाति तदा पुरःकर्म भवति । यदि वा पूर्वम् 'आचम्य' हस्तं मात्रकं वा प्रक्षाल्य प्रथमत एव यतीनां दद्यात् ततोऽन्येभ्यः परिवेषयेत् तदाऽपि पुरःकर्म भवति ॥ १८२५ ॥

एवं पुरःकर्मणि कृते यद् यत्र कल्पते तदेतद् निर्युक्तिगाथया दर्शयति—

**दाऊण अन्नदव्वं, कोई दिज्जा पुणो वि तं चेव ।**
**अत्तट्ठिय-संकामियगहणं गीयत्थसंविग्गे ॥ १८२६ ॥**

तद् अनेषणाकृतं द्रव्यं मुक्त्वा अन्यस्यान्यद् द्रव्यं 'दत्त्वा' परिवेष्य कश्चित् 'तदेव' अनेषणाकृतं द्रव्यं पुनरपि तस्यामन्यस्यां वा पङ्क्तौ साधूनां दद्यात्, एवं छिन्नव्यापारे आत्मार्थितं सत् कल्पते । अथवा "संकामिय" त्ति तदनेषणाकृतं द्रव्यं स दाता अन्यस्मै परिवेषयेत् स यदि दद्यात् तत एवं सङ्क्रामितं सत् कल्पते । एतच्च ग्रहणं गीतार्थस्यानुज्ञातम्, यतो गीतार्थस्तद् द्रव्यमित्थं गृह्णानोऽपि संविग्नो भवति ॥ १८२६ ॥ एतदेवान्त्यपदं[3] भाष्यकारो भावयति—

**गीयत्थग्गहणेणं, अत्तट्ठियमाइ गिण्हई गीतो ।**
**संविग्गग्गहणेणं, तं गिण्हंतो वि संविग्गो ॥ १८२७ ॥**

गीतार्थग्रहणेन कृतेनैतद् ज्ञापितं यद् आत्मार्थितम्, आदिशब्दात् सङ्क्रामितं च तद् आगमप्रमाणतो गीतार्थ एव गृह्णाति नागीतार्थः । संविग्नग्रहणेन तु 'तद्' आत्मार्थितादि गृह्णानोऽपि गीतार्थः संविग्नो भवति नासंविग्न इत्युक्तं भवति ॥ १८२७ ॥

इत्थं पुनः पुरतः कृतमपि न पुरःकर्म भवतीति दर्शयति—

**पुरतो वि हु जं धोयं, अत्तट्ठाए न तं पुरेकम्मं ।**
**तं उदउल्लं ससिणिद्धगं व सुक्खे तहिं गहणं ॥ १८२८ ॥**

यत् 'पुरतोऽपि' साधोरग्रतोऽप्यात्मार्थं धौतं तत् पुरःकर्म न भवति, किन्तु तद् उदकार्द्रं सस्निग्धं वा मन्तव्यम् । 'उदकार्द्रं' बिन्दुसहितम्, 'सस्निग्धं' बिन्दुरहितम् । तस्मिन्नुभयेऽपि 'शुष्के' परिणते ग्रहणं कर्त्तव्यम् ॥ १८२८ ॥ पुरःकर्मोदकार्द्रयोर्विशेषमाह—

**तुल्ले वि समारंभे, सुके गहणेक एक पडिसेहो ।**
**अन्नत्थ छूढ ताविय, अत्तट्ठे होइ खिप्पं तु ॥ १८२९ ॥**

उदकार्द्र-पुरःकर्मणोस्तुल्येऽप्यप्कायसमारम्भे 'एकस्मिन्' उदकार्द्रे शुष्के सति ग्रहणं भवति 'एकस्मिन्' पुरःकर्मणि पुनः शुष्केऽप्यनात्मार्थिते ग्रहणस्य प्रतिषेधः । तथाहि—संयतार्थं द्वाभ्यां पृथक्पृथक्पङ्क्तौ पुरःकर्म कृतम्, तच्च परिणतम् उदकार्द्र-सस्निग्धौ न स्तः, परं येनात्मार्थितं तस्य हस्तात् कल्पते, येन तु नात्मार्थितं तस्य हस्ताद् न कल्पते । एवं चिरकालिके पुरःकर्मण्युक्तम् । यत्र तु हस्तो मात्रकं वा तत्क्षणमेव 'अन्यत्र' तक्रादौ प्रासुकद्रव्ये प्रक्षिप्तमग्निना वा

१ °ऊण य पु° ता० ॥ २ °द् दर्श° भा० ॥ ३ °पदं भाव° भा० कां० ॥

तापितं तत्रात्मार्थिते क्षिप्रमपि ग्रहणं कर्त्तव्यम् ॥ १८२९ ॥

गतं कस्येति द्वारम् । अथारोपणाद्वारमाह—

चाउम्मासुक्कोसे, मासिय मज्झे य पंचग जहन्ने ।
पुरकम्मे उदउल्ले, ससिणिद्धाऽऽरोवणा भणिया ॥ १८३० ॥

उदकसमारम्भे पुरःकर्मोत्कृष्टमपराधपदम्, उदकार्द्रं मध्यमम्, सस्निग्धं जघन्यम् । उत्कृष्टे चत्वारो मासा लघवः, मध्यमे लघुमासिकम्, जघन्ये पञ्चरात्रिन्दिवानि । एवं पुरःकर्मोदकार्द्र-सस्निग्धेषु यथाक्रममारोपणा भणिता ॥ १८३० ॥ अथ परिहरणाद्वारमाह—

परिहरणा वि य दुविहा, विहि-अविहीए अ होइ नायव्वा ।
पढमिल्लुगस्स सव्वं, बिइयस्स य तम्मि गच्छम्मि ॥ १८३१ ॥
तइयस्स जावजीवं, चउथस्स य तं न कप्पए दव्वं ।
तद्दिवस एगगहणे, नियट्टगहणे य सत्तमए ॥ १८३२ ॥

परिहरणाऽपि च द्विविधा—विधिपरिहरणा अविधिपरिहरणा च भवति ज्ञातव्या । अविधिपरिहरणा सप्तविधा—तत्र प्रथमस्य नोदकस्य सर्वमपि द्रव्यजातं स्वगच्छे परगच्छे च यावज्जीवमकल्पनीयम् १, द्वितीयस्य तु तस्मिन्नेव गच्छे यावज्जीवम् २, तृतीयस्य यावज्जीवं तस्यैवैकस्य साधोः सर्वमपि द्रव्यजातम् ३, चतुर्थस्य तु तद् द्रव्यमेकं यावज्जीवम् ४, पञ्चमस्य तु तद्दिवसं सर्वद्रव्याणि ५, षष्ठस्य तु तस्यैवैकद्रव्यस्य ग्रहणं न कल्पते ६, सप्तमस्य निवृत्तः सन् स एव साधुः परिणतेन हस्तेन ग्रहणं करोतीत्यभिप्रायः ७ ॥ १८३१ ॥ १८३२ ॥

अथैतेषामेव पराभिप्रायेण व्याख्यानमाह—

पढमो जावज्जीवं, सव्वेसिं संजयाण सव्वाणि ।
दव्वाणि निवारेई, बीओ पुण तम्मि गच्छम्मि ॥ १८३३ ॥

प्रथमो नोदको यस्मिन् गृहे पुरःकर्म कृतं तत्र यावदसौ पुरःकर्मकारी दाता यदर्थं च तत् पुरःकर्म कृतं तौ यावद् जीवतस्तावत् स्वगच्छ-परगच्छसत्कानां सर्वेषां संयतानां सर्वाणि द्रव्याणि निवारयति । द्वितीयः पुनस्तस्मिन् गच्छे सर्वेषामपि साधूनां यावज्जीवं सर्वद्रव्याणि निवारयति ॥ १८३३ ॥

तइओ जावज्जीवं, तस्सेवेगस्स सव्वदव्वाइं ।
वारेइ चउत्थो पुण, तस्सेवेगस्स तं दव्वं ॥ १८३४ ॥

तृतीयो ब्रवीति—यदर्थं पुरःकर्म कृतं तस्यैवैकस्य यावज्जीवं सर्वद्रव्याणि न कल्पन्ते । चतुर्थस्तु तदेवैकं द्रव्यं तस्यैवैकस्य यावज्जीवं वारयति ॥ १८३४ ॥

सव्वाणि पंचमो तद्दिणं तु तस्सेव छट्ठो तं दव्वं ।
सत्तमओ नियट्टंतो, गिण्हइ तं परिणयकरम्मि ॥ १८३५ ॥

पञ्चमो ब्रवीति—तदेवैकं दिनं सर्वाणि द्रव्याणि तदीयगृहे न कल्पन्ते । षष्ठो ब्रूते—तदेवैकं द्रव्यं तस्य गृहे तद्दिनं मा गृह्यताम् । सप्तमः प्राह—'परिणतकरे' परिणताप्काये सति हस्ते भिक्षामटित्वा निवर्त्तमानस्तत्रैव गृहे स एव साधुः सर्वद्रव्याणि गृह्णातु न कश्चिद् दोषः ॥१८३५॥

इत्थं परैरुक्ते सति सूरिराह—

**एगस्स पुरेकम्मं, वत्तं सव्वे वि तत्थ वारिंति ।**
**दव्वस्स य दुल्लभता, परिचत्तो गिलाणओ तेहिं ॥ १८३६ ॥**

'एकस्य' साधोरर्थाय पुरःकर्म यत्र 'वृत्तं' सञ्जातं तत्र ये सर्वेषामेकस्य वा सर्वद्रव्याणि उपलक्षणत्वादेकमपि द्रव्यं यावज्जीवं तद्दिनं वा वारयन्ति तैर्द्रव्यस्य ग्लानप्रायोग्यस्यान्यत्र दुर्लभतया ग्लानः परित्यक्तो मन्तव्यः ॥ १८३६ ॥ एतदेव सविशेषमाह—

**जेसिं एसुवएसो, आयरिया तेहि ऊ परिच्चत्ता ।**
**खमगा पाहुणगा वि य, सुव्वत्तमजाणगा ते उ ॥ १८३७ ॥**

'येषां' यथाच्छन्दवादिनां 'एषः' सर्वद्रव्यग्रहणादिप्रतिषेधरूप उपदेशस्तैराचार्याः क्षपकाः प्राघूर्णकाश्च परित्यक्ता द्रष्टव्याः, तत्प्रायोग्यस्य घृतादिद्रव्यस्यान्यत्र दुर्लभत्वात् । ते च 'सुव्यक्तं' परिस्फुटम् 'अज्ञाः' मूर्खाः, अतत्त्ववेदित्वात् । स्वच्छन्दप्ररूपणानिष्पन्नं चामीषां चतुर्गुरु प्रायश्चित्तम् ॥ १८३७ ॥ तत्र ये सर्वानपि साधून् परिहारं कारयन्ति ते स्वपक्षसाधनसमर्थं विधिमाहुः—

**अद्धाणनिग्गयाई, उब्भामग खमग अक्खरे रिक्खा ।**
**मग्गण कहण परंपर, सुव्वत्तमजाणगा ते वि ॥ १८३८ ॥**

यत्र गृहे पुरःकर्म कृतं तत्राध्वनिर्गतादयः 'उद्भ्रामका वा' बहिर्ग्रामे भिक्षाटनशीलाः 'अजानन्तो मा प्रविक्षन्' इति कृत्वा क्षपकस्तत्र स्थाप्यते । अथ नास्ति क्षपकस्ततः कुड्यादावक्षराणि लिख्यन्ते, यथा—अत्र पुरःकर्म कृतम् , न केनापि भिक्षा ग्राह्येति । अथ तावक्षराणि लिखितुं न जानीतस्ततो रेखा कर्तव्या । अथ कृताऽपि सा केनापि भज्येत ततोऽपरेषां साधूनां मार्गणं कृत्वा मिलितानां कथनीयम्—अमुष्मिन् गृहे पुरःकर्म कृतम् । तेऽपि परम्परया सर्वसाधून् ज्ञापयन्ति । इत्थं ये ब्रुवते सुव्यक्तं तेऽप्यज्ञा मन्तव्याः ॥ १८३८ ॥ अथैतदेव भावयति—

**उब्भामग-ऽणुब्भामग-सगच्छ-परगच्छजाणणट्ठाए ।**
**अच्छइ तहियं खमओ, तस्सऽसइ स एव संघाडो ॥ १८३९ ॥**
**जइ एगस्स वि दोसा, अक्खर न उ ताइँ सव्वतो रिक्खा ।**
**जइ फुसण संकदोसा, हिंडंता चेव साहंति ॥ १८४० ॥**

उद्भ्रामकाणां—बाह्यग्रामे भिक्षाटनं विधायापर्याप्ते तत्रैव भिक्षामटताम् अनुद्भ्रामकाणां—मौलग्रामे भिक्षापरिभ्रमणशीलानां स्वगच्छीयानां परगच्छीयानां च सर्वेषां ज्ञापनार्थं क्षपकस्तत्र गृहे निषण्णस्तिष्ठति । स च यो यः सङ्घाटकस्तत्रागच्छति तस्य तस्य कथयति—अत्र पुरःकर्म कृतं वर्तते । अथ नास्ति क्षपकः पारणकं वा तस्य तद्दिने ततो यदर्थं पुरःकर्म कृतं स एव सङ्घाटकस्तत्र तिष्ठति ॥ १८३९ ॥

अथ तयोरेकः प्रथम-द्वितीयपरीषहपीडितो न शक्नोति स्थातुम् ततः स प्रतिश्रयं व्रजति द्वितीयस्तु तत्रास्ते । अथैकस्य तस्य तिष्ठतः स्त्रीसमुत्थादयो दोषाः ततः कुड्यादिषु पुरःकर्मकरणसूचकान्यक्षराणि लिख्यन्ते । अथ 'न तु' नैव 'तानि' अक्षराणि सर्वेऽपि लिखितुं जानते

१ सुव्वत्तम° डे० ॥

ततः साधुजनसाङ्केतिकी रेखा करणीया। यदि तस्याः 'स्पर्शना' पादोपघातेन मर्दना तद्विषया आशङ्कादोषा भवेयुः, बहुवचननिर्देशादन्योऽपि रेखां करोतीत्याद्याशङ्कापरिग्रहः, ततस्तावेव साधू भिक्षामटन्तावपरेषां साधूनां कथयतः, तेऽपि हिण्डमाना एव परम्परया सर्वसाधूनां कथयन्ति। इत्थं येषां परिहरणविधिस्ते सुव्यक्तमज्ञा मन्तव्याः ॥ १८४० ॥ उपसंहरन्नाह—

एसा अविही भणिया, सत्तविहा खलु इमा विही होइ।
तत्थाई चरिमदुए, अत्तट्ठियमाइ गीयस्स ॥ १८४१ ॥

एषा अविधिपरिहरणा सप्तविधा भणिता। 'इयं तु' वक्ष्यमाणा विधिपरिहरणा भवति। सा चाष्टविधा। 'तत्र' अष्टानां भङ्गानां मध्याद् यदाद्यं पदं यच्च चरमम्—अन्तिमं प्रकारद्वयं तेषु त्रिषु भेदेषु आत्मार्थिते आदिशब्दात् सङ्क्रामिते च सति गीतार्थस्य ग्रहणं भवति। एतच्च यथास्थानं भावयिष्यते ॥ १८४१ ॥ के पुनस्तेऽष्टौ भेदाः? उच्यन्ते—

एगस्स बीयगहणे १, पसज्जणा तत्थ होइ २ कप्पट्ठी ३।
वारण ललियासणिओ ४, गंतूणं ५ कम्म ६ हत्थ ७ उप्फोसे ८ ॥ १८४२ ॥

"एगस्से"ति विभक्तिव्यत्ययादेकेन पुरःकर्मणि कृते यदि द्वितीयो ददाति तदा तस्य द्वितीयस्य हस्ताद् ग्रहणे विधिर्वक्तव्यः १। तथा "पसज्जण" त्ति अगीतार्थाभिप्रायेण "तत्थ" त्ति 'तत्र' द्वितीयेऽपि दायके 'प्रसजना' प्रसङ्गदोषो भवतीति वक्तव्यम् २। "कप्पट्ठि" त्ति 'कल्पस्थिकाः' तरुणस्त्रियः केलिप्रियतया अभीक्ष्णं पुरःकर्म यथा कुर्वन्ति तथा निरूपणीयम् ३। "वारण ललियासणिओ" त्ति यदि साधुः 'त्वं मा देहि एषा दास्यति' इत्यविधिना पुरःकर्मकारिणीं वारयति तदा ललिताशनिक इति[3] तया यथा गण्यते तथा वक्तव्यम् ४। "गंतूणं" ति 'गत्वा प्रतिनिवृत्तायास्मै दास्यामि' इति बुद्ध्या यदि दाता हस्तगृहीतया भिक्षया तिष्ठति तदा न कल्पते[4] इति वाच्यम् ५। "कम्मे" त्ति द्रव्यभावभेदभिन्नं पुरःकर्म यथा भवति तथा दर्शनीयम् ६। "हत्थ" त्ति तत्र पुरःकर्मणि किं हस्ते उपघातः? उत मात्रके? इत्यादि चिन्तनीयम् ७। "उप्फोसे" त्ति उत्स्पर्शनं—छन्दनं तद् वस्त्रविषयं वक्तव्यम् इति द्वारगाथासमासार्थः ॥ १८४२ ॥

अथ विस्तरार्थमभिधित्सुराह—

एगेण समारद्धे, अन्नो पुण जो तहिं सयं देइ।
जयऽजाणगा भवंती, परिहरियव्वं पयत्तेण ॥ १८४३ ॥

'एकेन' दायकेन पुरःकर्मणि समारब्धे साधुना प्रतिषिद्धे तद् द्रव्यं यद्यन्यः स्वयमेव कश्चिद् ददाति तदा ते साधवो यदि 'अज्ञाः' अगीतार्था अगीतार्थमिश्रा वा भवन्ति ततः परिहर्त्तव्यं प्रयत्नेन ॥ १८४३ ॥ इदमेव व्यतिरेकेणाह—

---

१ तत्र यदाद्यं मो० ले० विना ॥ २ यद्यन्यो ददाति तदा किं कल्पते? न वा? इति वक्तव्यं विधिर्वक्तव्यः। तृतीयोऽपि दाता यदि पुरःकर्म करोति तदा तत्र 'प्रसजना' प्रसङ्गदोषो भवति तां च 'कल्पस्थिकाः' तरुणस्त्रियः कुर्वन्ति। "वारण भा० ॥ ३ °ति गण्यते ४। "गं° मो० ले० विना ॥ ४ °ते ५। "क° मो० ले० विना ॥ ५ °कर्म भवति ६। "ह° मो० ले० विना ॥ ६ °त्सुः प्रथमतः एकेन इति द्वारं विवृणोति भा० ॥ ७ °दा यदि मो० ले० विना ॥ ८ °व स्पष्टतरमाह भा० ॥

**समणेहिं अमणंतो, गिहिभणिओ अप्पणो व छंदेणं ।**
**मोत्तु अजाणग मीसे, गिण्हंति उ जाणगा साहू ॥ १८४४ ॥**

पुरःकर्मकारिणि प्रतिषिद्धे 'श्रमणैः' साधुभिरमण्यमानो यद्यन्यो दाता गृहिणा केनापि भणित आत्मनो वा 'छन्देन' अभिप्रायेण ददाति तदा मुक्त्वा 'अज्ञान्' अगीतार्थान् 'मिश्राँश्च' अगीतार्थमिश्रान् 'ज्ञायकाः' गीतार्थास्तद् द्रव्यमात्मार्थितं गृह्णन्ति ॥ १८४४ ॥ अथ किमर्थम-गीतार्थेषु न गृह्यते ? इति सम्बन्धायातं प्रसजनाद्वारं विवृण्वन् तावदगीतार्थाभिप्रायमाह—

**अम्हट्ठसमारद्धे, तदन्नवऽण्णेण किह णु निद्दोसं ।**
**सविसन्नाहरणेणं, मुज्झइ एवं अजाणंतो ॥ १८४५ ॥**

अस्माकमर्थायाप्काये समारब्धे सति दायकेन यद् द्रव्यं गृहीतं तद् अन्येन दीयमानं कथं नु निर्दोषम् ? सदोषमेवेति भावः । कुतः ? इत्याह—'सविषान्नाहरणेन' सविषं यद् अन्नं तद्दृष्टान्तेन । यथा हि वैरिणोऽर्थाय केनचिद् विषयुक्तं भक्तं कृतं तद् अन्येन दीयमानं किं सदोषं न भवति ? एवमस्मदर्थमुदकस्यारम्भं कृत्वा या भिक्षा गृहीता तां यद्यन्यो ददाति तदा किं दोषो न प्रसजति ? इति । एवमजानन्नगीतार्थो मुह्यति, न पुनर्भावयति, यथा—तद् अन्येन दीयमानं पुरःकर्मैव न भवति । यत एवमतोऽगीतार्थेषु मिश्रेषु वा परिहर्त्तव्यम् ॥ १८४५ ॥

गीतार्थेषु विधिमाह—

**एगेण समारद्धे, अन्नो पुण जो तहिं सयं देइ ।**
**जइ जाणगा उ साहू, परिभोत्तुं जे सुहं होइ ॥ १८४६ ॥**

एकेन पुरःकर्मणि समारब्धे यद्यन्यः स्वयं ददाति यदि च 'ज्ञायकाः' गीतार्थाः साधवस्ततः परिभोक्तुं "जे" इति पादपूरणे सुखं भवति, परिभोक्तव्यं तदिति भावः ॥१८४६॥ अथवा—

**गीयत्थेसु वि भयणा, अन्नो अन्नं व तेण मत्तेणं ।**
**विप्परिणयम्मि कप्पइ, ससिणिद्धुदउल्ल पडिकुट्ठा ॥ १८४७ ॥**

गीतार्थेष्वपि भजना कार्या । कथम् ? इत्याह—'अन्यः' पुरुषोऽन्यद् वा तद् वा द्रव्यं 'तेन' पुरःकर्मकृतेन मात्रकेण यदि ददाति तदा विपरिणतेऽप्काये आत्मार्थिते च सति कल्पते । यदि तु सस्निग्धमुदकार्द्रं वा दायकस्य पाणितलं भवति ततः प्रतिकुष्टा सा भिक्षा, न कल्पत इत्यर्थः ॥ १८४७ ॥ अथ कल्पस्थिकाद्वारं व्याख्याति—

**तरुणीउ पिंडियाओ, कंदप्पा जइ करे पुरेकम्मं ।**
**पढम-बिइयासु मोत्तुं, सेसे आवज्ज चउलहुगा ॥ १८४८ ॥**

काश्चित् 'तरुण्यः' युवतयः 'पिण्डिताः' एकत्र मिलिताः साधुं समायान्तं दृष्ट्वा परस्परं जल्पन्ति—'एतेषां तावदेतदर्थं धौतेन हस्तेन मात्रकेण वा दीयमानं न कल्पते, अतः पश्यामस्तावदेनम्, अस्माभिः खलीकृतः किमेष करोति ?' इत्येकया तासां मध्यादुत्थाय पुरःकर्म कृतम्, ततः साधुः प्रतिनिवर्त्तितुं लग्नः; द्वितीया ब्रवीति—प्रतीक्षस्व भगवन् ! अहं ते दास्यामि; ततो भूयोऽप्यागतस्य तस्य तयाऽपि पुरःकर्म कृतम्; ततः प्रतिनिवर्त्तमानं यदि तृतीया काचि-

---

१ °र्थो गृह्णन्ति ॥१८४४॥ गतम् "एकेन द्वितीयग्रहणे" इति द्वारम् । अथ किमर्थं° भा० ॥

दाकारयति तदा ज्ञातव्यम्, यथा—एता मां खलीकुर्वन्ति; अतो न प्रतिनिवर्त्तितव्यम् । अत एवाह—यदि ताः कन्दर्पात् पुरःकर्म कुर्वीरन् ततः प्रथम-द्वितीये तरुण्यौ मुक्त्वा शेषाभिराकारितः प्रतिनिवर्त्तमान आपद्यते चतुर्लघुकम् ॥ १८४८ ॥

अथ वारणललिताशनिकद्वारं व्याचष्टे—

पुरकम्मम्मि कयम्मी, जइ भणइ मा तुमं इमा देउ ।
संकापदं व होज्जा, ललितासणिओ व सुव्वत्तं ॥ १८४९ ॥

पुरःकर्मणि कृते यदि साधुना दात्री भण्यते 'मा दास्त्वम् इयं ददातु' ततः सा चिन्तयति—अहं विरूपा वृद्धा वा अतो नास्मै प्रतिभामि, इयं तु सुरूपा यौवनमभिरूढा प्रतिभासते । शङ्कापदं वा तस्याश्चेतसि भवेत्—किमेष एतया सह घटितो यदेवमस्याः पार्श्वाद् भिक्षां ग्रहीतुमिच्छति ? । यदि वा ब्रूयात्—भवान् सुव्यक्तं ललिताशनिको लक्ष्यते यदेवं यथाभिलषितां परिवेषिकामभिकाङ्क्षसि । [1] अत इयं ददातु मा त्वमिति न वक्तव्यम् [1] ॥१८४९॥

अथ गत्वेतिद्वारं व्याख्यानयति—

गंतूण पडिनियत्तो, सो वा अन्नो व से तयं देइ ।
अन्नस्स व दिज्जिहिई, परिहरियव्वं पयत्तेणं ॥ १८५० ॥

कृतपुरःकर्मा दायको भिक्षां ददानः साधुना प्रतिषिद्धश्चिन्तयति—'यदैष साधुरस्यां गृहपङ्क्तौ गत्वा प्रतिनिवृत्तः समायास्यति तदा दास्यामि' इति तद् द्रव्यं स वा अन्यो वा दायकः "से" तस्य साधोर्ददाति तदा न कल्पते । अथ यद्येष न गृह्णाति ततः 'अन्यस्य' साधोर्दास्यते इति सङ्कल्पयति ततस्तेनापि परिहर्त्तव्यं तद् भक्तं प्रयत्नेन । एषा[2] निर्युक्तिगाथा ॥ १८५० ॥

अस्या[3] एव भाष्यकारो व्याख्यानमाह—

पुरकम्मम्मि कयम्मी, पडिसिद्धो जइ भणिज्ज अन्नस्स ।
दाहं ति पडिनियत्ते, तस्स व अन्नस्स व न कप्पे ॥ १८५१ ॥

पुरःकर्मणि कृते प्रतिषिद्धो दायको यदि भणेत्—अन्यस्मै साधवे दास्यामीति । ततः प्रतिनिवृत्तस्य तस्य वा अन्यस्य वा न कल्पते ॥ १८५१ ॥ तथा—

भिक्खयरस्सऽन्नस्स व, पुव्वं दाऊण जइ दए तस्स ।
सो दाया तं वेलं, परिहरियव्वो पयत्तेणं ॥ १८५२ ॥

पुरःकर्मणि कृते पूर्वमन्यस्य भिक्षाचरस्य भिक्षां दत्त्वा पश्चादच्छिन्नव्यापारः 'तस्य' साधोर्भिक्षां दद्यात्, स दाता तस्यां वेलायां प्रयत्नेन परिहर्त्तव्य इति ॥ १८५२ ॥

अमुमेवार्थं किञ्चिद्विशेषयुक्तमाह—

अन्नस्स व दाहामी, अण्णस्स व संजयस्स न वि कप्पे ।
अत्तट्ठिए व चरगाइणं च दाहं ति तो कप्पे ॥ १८५३ ॥

अन्यस्मै वा साधवे दास्यामीति यदि सङ्कल्पयति तदा अन्यस्यापि संयतस्य नैव कल्पते ।

---

१ [1] एतदन्तर्गतः पाठः भा० त० डे० नास्ति ॥ २ °षा पुरातना गा° भा० कां० । "गंतूण पडिनियत्तो० गाहा पुरातना" इति विशेषचूर्णौ ॥ ३ °स्या व्या° भा० कां० ॥

अथ आत्मार्थयति 'चरकादीनां वा दास्यामि' इति सङ्कल्पयति ततः परिणते हस्ते मात्रके वा कल्पते ॥ १८५३ ॥ अथ कर्मेति द्वारं विवृणोति—

पुरःकर्म-द्वारम्

दव्वेण य भावेण य, चउक्कभयणा भवे पुरेकम्मे ।
सागरिय भावपरिणय, तइओ भावे य कम्मे य ॥ १८५४ ॥
सुद्धो चउत्थ भंगो, मज्झिल्ला दोण्णि वी पडिकुट्ठा ।
संपत्तीइ वि असती, गहणपरिणतें पुरेकम्मं ॥ १८५५ ॥

द्रव्येण च भावेन च 'चतुष्कभजना' चतुर्भङ्गीरचना पुरःकर्मणि भवति । तद्यथा—द्रव्यतः पुरःकर्म न भावतः १ भावतः पुरःकर्म न द्रव्यतः २ द्रव्यतोऽपि भावतोऽपि पुरःकर्म ३ न द्रव्यतो न भावतः पुरःकर्म ४ । अथामीषां भावना—"सागरिय" त्ति ये शौचवादिनोऽभाविताश्च गृहस्थास्ते पुरःकर्मणि कृते यदि न गृह्यते ततः 'अशुचयोऽमी' इति मन्येरन्; इत्थं सागारिकभयात् पुरःकर्मकृतेन हस्तादिना भक्तादिकं गृहीत्वाऽपि परिष्ठापयतो द्रव्यतः पुरःकर्म भवति न भावत इति । "भावपरिणय" त्ति भिक्षामवतरन् 'पुरःकर्मकृतमपि भक्तादिकं ग्रहीष्ये' इति भावेन परिणतस्तथापि पुरःकर्मकृतं न लब्धमिति भावतः पुरःकर्म न द्रव्यत इति । "तइओ भावे य कम्मे य" त्ति 'पुरःकर्मकृतं ग्रहीष्यामि' इति भावपरिणतो भिक्षामवतीर्णः प्राप्तं च तेन पुरःकर्मकृतमिति तृतीयभङ्गो द्रष्टव्यः ॥ १८५४ ॥

चतुर्थस्तु [ भङ्गः ] पुरःकर्म प्रतीत्योभयथाऽपि शून्यः, अयं चात्र निरवद्यः प्रतिपत्तव्यः । 'मध्यमौ' द्वितीय-तृतीयभङ्गौ द्वावपि 'प्रतिकुष्टौ' प्रतिषिद्धौ, भावस्याविशुद्धत्वात् । प्रथमभङ्गस्तु शुद्ध इव मन्तव्यः, प्रयोजनापेक्षत्वात् । द्वितीयभङ्गे तु "संपत्तीइ वि असई गहणपरिणए पुरेकम्मं" ति द्रव्यतः सम्प्राप्तावसत्यामपि भावतो ग्रहणपरिणतस्य पुरःकर्म भवति ॥ १८५५ ॥

अस्यैव निर्युक्तिगाथाद्वयस्य भावार्थमाक्षेप-परिहाराभ्यां स्पष्टयितुमाह—

पुरकम्मम्मि कयम्मी, जइ गिण्हइ जइ य तस्स तं होइ ।
एवं खु कम्मबंधो, चिट्ठइ लोए व बंभवहो ॥ १८५६ ॥

पुरःकर्मणि कृते यदि गृह्णाति, यदि च 'तस्य' यतेः 'तत्' पुरःकर्मग्रहणं प्रति भावो भवति तदा तृतीयभङ्गो भवतीति वाक्यशेषः । आह पुरःकर्मदोषस्तावद् दायकस्य न भवति, कृतोऽपि चासौ प्रथमभङ्गे साधोर्गृह्णतोऽपि यदि न भवति, एवं 'खुः' अवधारणे पुरःकर्मकृतः कर्मबन्धो दायकग्राहकयोरस्थितस्तटस्थ एव तिष्ठति, यथा लोके ब्रह्मवध इति । [ एत्थ ] इमं लोइयं उदाहरणं—

इंदेण उडंकरिसिपत्ती रूववती दिट्ठा । तओ अज्झोववन्नो तीए समं अहिगमं गतो सो तओ निगच्छंतो रिसिणा दिट्ठो । रुट्ठेण रिसिणा तस्स सावो दिन्नो । जम्हा तुमे अगम्मा रिसि-

१ °ओ दव्वे य भावे य ता० ॥ २ भवेत् । त° मो० ले० ॥ ३ °कर्मेति तृतीयो भङ्गः ॥ १८५४ ॥ चतु° मो० ले० विना ॥

४ °व्यः, यतस्तत्र प्रयोजनापेक्षतया द्रव्यतः पुरःकर्मणि सम्प्राप्तावपि भावतो न सम्प्राप्तः । द्वितीयभङ्गे तु द्रव्यतः "असइ" त्ति सम्प्राप्ताव[सत्याम]पि भावतो ग्रहणपरिणतस्य पुरःकर्म भवति ॥ १८५५ ॥ तृतीयभङ्गस्य परिस्फुटतरं व्याख्यानमाह—भा० ॥

पत्ती अभिगया तम्हा ते बंभवज्झा उवट्ठिया । सो तीए भीओ कुरुखेत्तं पविट्ठो । सा बंभवज्झा कुरुखेत्तस्स पासओ भमइ । सो वि तओ तब्भया न नीति । इंदेण विणा सुन्नं इंदट्ठाणं । ततो सव्वे देवा इंदं मग्गमाणा जाणिऊण कुरुखेत्ते उवट्ठिया भणंति—एहि, सणाहं कुरु देवलोगं । सो भणइ—मम इओ निग्गच्छंतस्स बंभवज्झा लग्गइ । तओ सा देवेहिं बंभवज्झा चउहा विहत्ता—एक्को विभागो इत्थीणं रिउकाले ठिओ, बिइओ उदगे काइयं निसिरंतस्स, तइओ बंभणस्स सुरापाणे, चउत्थो गुरुपत्तीए अभिगमे । सा बंभवज्झा एएसु ठिया । इंदो वि देवलोगं गओ । एवं तुब्भं पि पुरेकम्मकओ कम्मबंधदोसो ब्रह्महत्यावद् वेगलो भवति ॥ १८५६ ॥ पर एवाह—

संपत्तीइ वि असती, कम्मं संपत्तिओ वि य अकम्मं ।
एवं खु पुरेकम्मं, ठवणामित्तं तु चोएइ ॥ १८५७ ॥

यदि सम्प्राप्तावसत्यामपि द्वितीयभङ्गे साधोः पुरःकर्म भवति, सम्प्राप्तावपि च प्रथमभङ्गे यदि 'अकर्म' पुरःकर्म न भवति, ततः एवं 'खुः' अवधारणे इत्थमेव मदीयमनसि प्रतिष्ठितं यदेतत् पुरःकर्म तत् स्थापनामात्रमेव, तुशब्दस्यैवकारार्थत्वात् प्ररूपणामात्रमेवेदमिति 'नोदयति' प्रेरयति ॥ १८५७ ॥ अत्रोच्यते—यत् तावदुक्तम्—"एवं पुरःकर्मकृतः कर्मबन्धस्तटस्थ एव तिष्ठति" ( गा० १८५६ ) तत्र तिष्ठतु नाम, न काचिदस्माकं क्षतिरुपजायते, तथा चात्र त्वदुक्तमेव दृष्टान्तमनूद्यास्माभिः स्वाभिमतमर्थं साधयितुमिदमुच्यते—

इंदेण बंभवज्झा, कया उ भीओ अ तीएँ नासंतो ।
तो कुरुखेत्त पविट्ठो, सा वि बहिं पडिच्छए तं तु ॥ १८५८ ॥
निग्गय पुणो वि गिण्हे, कुरुखेत्तं एव संजमो अम्हं ।
जाहे ततो नीइ जीवो, घेप्पइ तो कम्मबंधेणं ॥ १८५९ ॥

इन्द्रेण ब्रह्महत्या कृता, ततो भीतः सन् तस्या नश्यन् कुरुक्षेत्रं प्रविष्टः । साऽपि ब्रह्महत्या 'तम्' इन्द्रं बहिः प्रतीक्षते । यदसौ कुरुक्षेत्रान्निर्गच्छति ततो निर्गतं तमिन्द्रं पुनरपि ब्रह्महत्या गृह्णाति । एवमस्माकमपि संयमः कुरुक्षेत्रम्, कर्मबन्धस्तु ब्रह्महत्यासदृशः, ततो यदा संयमकुरुक्षेत्राद् द्वितीय-तृतीयभङ्गयोरशुभाध्यवसायपरिणतो जीवो निर्गच्छति ततो गृह्यतेऽसौ कर्मबन्धेन ब्रह्महत्याकल्पेन, अनिर्गतस्तु प्रथम-चतुर्थभङ्गयोर्न गृह्यते ॥ १८५८ ॥ १८५९ ॥ यच्चोक्तम्—"स्थापनामात्रं पुरःकर्म" ( १८५७ ) तदपि न सङ्गच्छते, कुतः ? इति चेद् उच्यते—

जे जे दोसाययणा, ते ते सुत्ते जिणेहिँ पडिकुट्ठा ।
ते खलु अणायरंतो, सुद्धो इहरा उ भइयव्वो ॥ १८६० ॥

यानि यानि दोषाणां—प्राणातिपातादीनामायतनानि—स्थानानि पुरःकर्मप्रभृतीनि तानि तानि सूत्रे 'जिनैः' भगवद्भिः 'प्रतिक्रुष्टानि' निषिद्धानि । अतः 'तानि खलु' दोषायतनानि अनाचरन् साधुः शुद्धो मन्तव्यः । 'इतरथा तु' समाचरन् 'भक्तव्यः' विकल्पयितव्यः ॥ १८६० ॥

---

१ °भङ्गे एवमेव पुरः° भा० ॥ २ न कदाचिद्° भा० विना ॥ ३ °स्तु न गृह्यते, प्रथम-चतुर्थभङ्गयोरित्यर्थः ॥ १८५८ ॥ भा० ॥

परः प्राह—

**का भयणा जइ कारणि, जयणाएँ अकप्प किंचि पडिसेवे ।**
**तो सुद्धो इहरा पुण, न सुज्झए दप्पओ सेवं ॥ १८६१ ॥**

का पुनः 'भजना ?' विकल्पना ? । सूरिराह—कारणे यतनया पुरःकर्मादि किञ्चिदकल्प्यं यदि प्रतिसेवेत ततः शुद्धः[1] । 'इतरथा पुनः' अयतनया दर्पतो वा सेवमानो न शुध्यति ॥ १८६१ ॥ अथ पुरःकर्मवर्जने कारणमुपदर्शयति—

**समणुन्नापरिसंकी, अवि य पसंगं निहीण वारिंता ।**
**गिण्हंति असढभावा, सुविसुद्धं एसियं समणा ॥ १८६२ ॥**

[2]समनुज्ञा नाम—पुरःकर्मकृतं गृह्णतामप्कायविराधनानुमतिस्तत्परिशङ्किनः—तद्दोषभीताः पुरःकर्म परिहरन्ति । अपि च यदि पुरःकर्मकृतां भिक्षां ग्रहीष्यामस्ततो गृहिणां भूयः पुरःकर्मकरणे प्रसङ्गो भवति अतस्तं 'वारयन्तः' तद्ग्रहणेनार्थात् प्रतिषेधयन्तोऽशठभावाः सन्तः श्रमणाः सुविशुद्धमेषणीयं गृह्णन्ति ॥ १८६२ ॥ अथ हस्तद्वारं विवृणोति—

**किं उवघातो हत्थे, मत्ते दव्वे उदाहु उदगम्मि ।**
**तिन्नि वि ठाणा सुद्धा, उदगम्मि अणेसणा भणिया ॥ १८६३ ॥**

शिष्यः प्रश्नयति—पुरःकर्मणि कृते किं हस्ते 'उपघातः' अनेषणीयता ? उत मात्रके ? आहोश्विद् द्रव्ये ? उताहो उदके ? । सूरिराह—हस्त-मात्रक-द्रव्याणि त्रीण्यपि स्थानानि 'शुद्धानि' नैतान्यनेषणीयानि, किन्तूदकेऽनेषणीयता भणिता ॥ १८६३ ॥ अत्रैवोपपत्तिमाह—

**जम्हा तु हत्थ-मत्तेहिँ कप्पती तेहिँ चेव तं दव्वं ।**
**अत्तट्ठिय परिभुत्तं, परिणत तम्हा दगमणेसिं ॥ १८६४ ॥**

यस्मात् ताभ्यामेव हस्त-मात्रकाभ्यां तदेव द्रव्यमात्मार्थितं सत् परिभुक्तशेषं वा परिणतेऽप्काये कल्पते, तस्मादुदकमेवानेषणीयं न हस्त-मात्रक-द्रव्याणीति ॥ १८६४ ॥

एवमशनादिविषयो विधिरुक्तः । सम्प्रति[3] निर्युक्तिगाथया वस्त्रविषयं तमेवाह—

**किं उवघातो धोए, रत्ते चोक्खे सुइम्मि व कयम्मि ।**
**अत्तट्ठिय-संकामियगहणं गीयत्थसंविग्गे ॥ १८६५ ॥**

'धौतं' मलिनं सत् प्रक्षालितम्, 'रक्तं' धातुप्रभृतिभिर्द्रव्यै रक्तीकृतम्, 'चोक्खं' रजकपार्श्वादतीवोज्ज्वलं कारितम्, 'शुचिकम्' अशुच्यादिनोपलिप्तं सत् पवित्रीकृतम्, एतानि साध्वर्थं वस्त्रे कृतानि भवेयुः । ततश्च शिष्यः पृच्छति—किं धौते उपघातः ? उत रक्ते ? उताहो चोक्खे ? आहोश्वित् शुचीकृते ? । अत्रापि तदेव निर्वचनम्, नैतेषां चतुर्णामेकतरस्मिन्नप्युपघातः, किन्तूदक एव । यत एतदपि साधुना प्रतिषिद्धं सद् यथात्मार्थितं सङ्क्रामितं वा अन्यस्मै

---

1 कारणे पुरःकर्मादिकमासेवमानः शुध्यति । निष्कारणे अयतनया वा सेवमानो भा० ॥ 2 समनुज्ञां परिशङ्कितुं शीलमेषां ते समनुज्ञापरिशङ्किनः, 'मा भूदस्माकं पुरःकर्मकृतं गृह्णतामनुमतिदोषः' इत्याशङ्कया परिहरन्तीति भावः । तथा यदि पुरःकर्म° भा० ॥
3 °ति वस्त्र° मो० ले० विना ॥

दत्तं ततो गीतार्थसंविग्नस्य ग्रहणं भवति नान्यस्य ॥ १८६५ ॥

किमर्थमेतद् ग्रहणम् ? इति चेद् उच्यते—

**गीयत्थग्गहणेणं, अत्तट्ठियमाइ गिण्हई गीतो ।**
**संविग्गग्गहणेणं, तं गिण्हंतो वि संविग्गो ॥ १८६६ ॥**

गीतार्थग्रहणेनैतद् ज्ञाप्यते—आत्मार्थितं सङ्क्रामितं वा गीतार्थो गृह्णाति नागीतार्थः । संविग्नग्रहणेन तु—'तद्' आत्मार्थितादिकं गृह्णन्नपि 'संविग्नः' मोक्षाभिलाष्येव असौ नासंविग्न इति सूच्यते ॥ १८६६ ॥ उत्स्पर्शनद्वारं व्याचष्टे—

**एमेव य परिभुत्ते, नवे य तंतुग्गए अधोयम्मि ।**
**उप्फुसिऊणं देंते, अत्तट्ठिय सेविए गहणं ॥ १८६७ ॥**

यद् वस्त्रं गृहिणा परिधानादिना परिमलितं तत् परिभुक्तं भण्यते, तद्विपरीतं नवं—तन्तुभ्य उद्गतमात्रम् । ततः परिभुक्तं वा नवं वा तन्तूद्गतमधौतं सद् यद् 'उत्स्पृश्य' उदकेनाभ्युक्षणं दत्त्वा ददाति तत्राप्येवमेव द्रष्टव्यम्[1], न कल्पत इत्यर्थः । अथात्मार्थितमात्मना वा सेवितं—परिभुक्तं ततो ग्रहणं कर्त्तव्यम् ॥ १८६७॥ अथ विनेयानुग्रहार्थं प्रसङ्गतः पश्चात्कर्मण्यपि विधिमाह—

**संसट्ठमसंसट्ठे, य सावसेसे य निरवसेसे य ।**
**हत्थे मत्ते दव्वे, सुद्धमसुद्धे तिगट्ठाणा ॥ १८६८ ॥**

◁ इह भिक्षादातुः सम्बन्धी हस्तः संसृष्टो वा भवेदसंसृष्टो वा, येन च कांस्यिकादिना मात्रकेण भिक्षां ददाति तदपि संसृष्टमसंसृष्टं वा, द्रव्यमपि सावशेषं वा स्यान्निरवशेषं वा; अतः ▷ संसृष्टा-ऽसंसृष्ट-सावशेष-निरवशेषपदैर्हस्त-मात्रक-द्रव्यविषयैरष्टौ भङ्गा भवन्ति । तद्यथा—संसृष्टो हस्तः संसृष्टं मात्रकं सावशेषं द्रव्यं १ संसृष्टो हस्तः संसृष्टं मात्रकं निरवशेषं द्रव्यं २ संसृष्टो हस्तोऽसंसृष्टं मात्रकं सावशेषं द्रव्यं ३ संसृष्टो हस्तोऽसंसृष्टं मात्रकं निरवशेषं द्रव्यं ४, एवमसंसृष्टेनापि हस्तेन चत्वारो भङ्गाः प्राप्यन्ते ८ । एतस्यामष्टभङ्ग्यां यानि 'त्रीणि स्थानानि' हस्त-मात्रक-द्रव्यरूपाणि तैर्यत्र पश्चात्कर्मदोषो न भवति ते भङ्गकाः शुद्धा इतरे अशुद्धाः ॥१८६८॥

अमुमेवार्थं स्पष्टयति—

**पढमे भंगे गहणं, सेसेसु य जत्थ सावसेसं तु ।**
**अन्नेसु उ अग्गहणं, अलेव-सुक्खेसु ऊ गहणं ॥ १८६९ ॥**

[3]अस्यामष्टभङ्ग्यां यः प्रथमो भङ्गस्त्रिभिरपि पदैः शुद्धस्तत्र ग्रहणं भवति । शेषेष्वपि भङ्गकेषु यत्र सावशेषं द्रव्यं भवति तत्र ग्रहीतुं कल्पते, पश्चात्कर्मासम्भवात् । 'अन्येषु' निरवशेषपदयुक्तेषु भङ्गकेष्वग्रहणम्, न कल्पते ग्रहीतुमिति भावः । इयमत्र भावना—इह हस्तो मात्रकं वा द्वे वा स्वयोगेन संसृष्टे वा भवतामसंसृष्टे वा न तद्वशेन पश्चात्कर्म सम्भवति, किं तर्हि ? द्रव्यवशेन । तथाहि—यत्र द्रव्यं सावशेषं तत्रैते साध्वर्थं खरण्टिते अपि न दात्री प्रक्षालयति, भूयोऽपि परिवेषणसम्भवात्; यत्र तु निरवशेषं द्रव्यं तत्र साधुदानानन्तरं नियमतो हस्तं मात्रकं

१ °म्, तदपि न क° मो० ले० ॥ २ ◁ ▷ एतच्चिह्नान्तर्गतः पाठः भा० कां० नास्ति ॥ ३ 'प्रथमे भङ्गे' त्रिभिरपि पदैः शुद्धे ग्रहणं भा० ॥

वा प्रक्षालयति । ततो द्वितीयादिषु समेषु भङ्गेषु पश्चात्कर्मसम्भवान्न कल्पते, प्रथमादिषु तु भङ्गेषु तदसम्भवात् कल्पते ग्रहीतुमिति । यदि चैतेष्वपि यद् 'अलेपकृतं' सक्तु-मण्डकादि यच्च 'शुष्कं' गुडपिण्डकादि तयोर्निरवशेषयोरपि ग्रहणं कल्पते ॥ १८६९ ॥

उक्तं समसङ्गं पुरःकर्मद्वारम् । अथ ग्लान्यद्वारं बिभावयिषुराह—

ग्लान्य-द्वारम्

सग्गामे सउवसए, सग्गामे परउवस्सए चेव ।
खेत्तंतो अन्नगामे, खेत्तबहि सगच्छ परगच्छे ॥ १८७० ॥
सोऊण ऊ गिलाणं, उम्मग्गं गच्छ पडिवहं वा वि ।
मग्गाओ वा मग्गं, संकमई आणमाईणि ॥ १८७१ ॥

स्वग्रामे स्वोपाश्रये तिष्ठता श्रुतम्, यथा—अमुकत्र ग्लान इति, स्वग्रामे वा परेषां—साधूनामुपाश्रये कुतोऽपि प्रयोजनादायातेन, यद्वा 'क्षेत्रान्तः' क्षेत्राभ्यन्तरे अन्यग्रामे भिक्षाचर्यां गतेन, यदि वा क्षेत्रबहिरन्यग्रामे पथि वा वर्त्तमानेन एतेषु स्थानेषु स्वगच्छे वा परगच्छे वा ग्लानः श्रुतो भवेत्, श्रुत्वा च ग्लानं यः 'उन्मार्गम्' अटवीगामिनं पन्थानं 'प्रतिपथं वा' येन पथा आयातस्तमेव पन्थानं गच्छति 'मार्गाद्वा' विवक्षितपथादन्यमार्गं सङ्क्रामति स प्राप्नोति आज्ञादीनि दोषपदानि, आदिशब्दादनवस्था-मिथ्यात्व-विराधनापरिग्रहः । एवंकुर्वाणस्य चास्य यद् ग्लानोऽप्रतिजागरितः परितापनादिकं प्राप्नोति तन्निष्पन्नं प्रायश्चित्तम् ॥ १८७० ॥ १८७१ ॥

अत एवाह—

सोऊण ऊ गिलाणं, पंथे गामे य भिक्खवेलाए ।
जइ तुरियं नागच्छइ, लग्गइ गरुए स चउमासे ॥ १८७२ ॥

श्रुत्वा ग्लानं पथि वा गच्छन् ग्रामे वा प्रविष्टो भिक्षायां वा पर्यटन् यदि 'त्वरितं' तत्क्षणादेव नागच्छति ततः 'लगति' प्राप्नोति स चतुरो मासान् गुरुकान् ॥१८७२॥ यत एवमतः—

जह भमर-महुयरिगणा, निवतंती कुसुमियम्मि चूयवणे ।
इय होइ निवइअव्वं, गेलन्ने कइयवजढेणं ॥ १८७३ ॥

यथा भ्रमर-मधुकरीगणाः 'कुसुमिते' मुकुरिते 'चूतवने' सहकारवनखण्डे मकरन्दपानलोलुपतया निपतन्ति 'इति' अमुनैव प्रकारेण भगवदाज्ञामनुवर्त्तमानेन कर्मनिर्जरालाभलिप्सया ग्लान्ये समुत्पन्ने 'कैतवजढेन' मायाविप्रमुक्तेन त्वरितं 'निपतितव्यम्' आगन्तव्यं भवति । एवंकुर्वता साधर्मिकवात्सल्यं कृतं भवति, आत्मा च निर्जराद्वारे नियोजितो भवति ॥ १८७३ ॥

तस्य च ग्लानत्वस्य प्रतिबद्धामिमां द्वारगाथामाह—

सुद्धे सड्ढी इच्छकारे, असत्त सुहिय ओमाण लुद्धे य ।
अणुअत्तणा गिलाणे, चालण संकामणा तत्तो ॥ १८७४ ॥

प्रथमतः शुद्ध इति द्वारं वक्तव्यम् । ततः 'श्रद्धी' श्रद्धावानिति द्वारम्, तत इच्छाकारद्वारम्, तदनन्तरमशक्तद्वारम्, ततः सुखितद्वारम्, तदनु अपमानद्वारम्, ततोऽपि लुब्धद्वारम्,

१ उक्तं पुरः° मो० ले० विना ॥ २ °चर्यागते° भा० ॥ ३ मो० ले० कां० विनाऽन्यत्र— °क्षां वा त० डे० । °क्षावेलायां वा भा० ॥ ४ तह हो° ता० ॥

ततोऽनुवर्तना ग्लानस्य उपलक्षणत्वाद् वैद्यस्य च कर्त्तव्या, ततश्चात्मना संक्रामणा च ग्लानस्याभिधातव्येति द्वारगाथासमुदायार्थः ॥ १८७४ ॥ अथावयवार्थं प्रतिद्वारं प्रचिकटयिषुः "यथोद्देशं निर्देशः" इति वचनात् प्रथमतः शुद्धद्वारं भावयति—

सोऊण ऊ गिलाणं, जो उवचारेण आगओ सुद्धो ।
जो उ उवेहं कुज्जा, लग्गइ गुरुए सवित्थारे ॥ १८७५ ॥

श्रुत्वा ग्लानं 'यः' साधुः 'उपचारेण' वक्ष्यमाणलक्षणेन ग्लानसमीपमागतः सः 'शुद्धः' न प्रायश्चित्तभाक् । यस्तूपेक्षां कुर्यात् सः 'लगति' प्राप्नोति चतुरो गुरुकान् 'सविस्तरान्' ग्लानारोपणासंयुक्तान् ॥ १८७५ ॥ उपचारपदं व्याचष्टे—

उवचरइ को णऽतिणो, अहवा उवचारमित्तगं एइ ।
उवचरइ व कज्जत्थी, पच्छित्तं वा विसोहेइ ॥ १८७६ ॥

यत्र ग्लानो वर्त्तते तत्र गत्वा पृच्छति—"को णऽतिणो" त्ति द्वितीयार्थे प्रथमा, 'नुः' इति प्रश्ने, युष्माकं मध्ये 'अतिनं' ग्लानं 'क उपचरति ?' कः प्रतिजागर्त्ति ?; यद्वा धातूनामनेकार्थत्वाद् 'उपचरति' पृच्छति—को नु युष्माकं मध्ये "अतिण्णो ?" ग्लानो येनाहं तं प्रतिजागर्मि ? । अथवा 'उपचारमात्रं' लोकोपचारमेव केवलमनुवर्त्तयितुं ग्लानसमीपम् 'एति' आगच्छति । यदि वा कार्यार्थी सन्नुपचरति । किमुक्तं भवति ?—कार्यं किमपि ज्ञान-दर्शनादिकं तत्समीपादीहमानः प्रतिजागर्ति । 'प्रायश्चित्तं वा मे भविष्यति यदि न गमिष्यामि' इति विचिन्त्यागत्य च प्रायश्चित्तं विशोधयति । एष सर्वोऽप्युपचारो द्रष्टव्यः ॥ १८७६ ॥

अथ श्रद्धावानिति द्वारमाह—

सोऊण ऊ गिलाणं, तूरंतो आगओ दवदवस्स ।
संदिसह किं करेमी, कम्मि व अट्ठे निउंजामि ॥ १८७७ ॥
पडिचरिहामि गिलाणं, गेलन्ने वावडाण वा काहं ।
तित्थाणुसज्जणा खलु, भत्ती य कया हवइ एवं ॥ १८७८ ॥

'ग्लानं प्रतिजाग्रदहं महतीं निर्जरामासादयिष्यामि' इत्येवंविधया धर्मश्रद्धया युक्तः श्रद्धावानुच्यते । स च श्रुत्वा ग्लानं 'त्वरमाणः' श्रवणानन्तरं शेषकार्याणि विहाय पन्थानं प्रतिपन्नः सन् "दवदवस्स" त्ति द्रुतं द्रुतं गच्छन् झगिति ग्लानसमीपमागतस्ततो ग्लानप्रतिचारकानाचार्यान् वा गत्वा भणति—सन्दिशत भगवन्तः ! किं करोम्यहं ? कस्मिन् वा 'अर्थे' ग्लानसम्बन्धिनि प्रयोजने युष्माभिरहं नियोज्ये ?, अहं तावदनेनाभिप्रायेणायातः, यथा—प्रतिजागरिष्यामि ग्लानं ग्लानवैयावृत्त्ये वा व्यापृता ये साधवस्तेषां भक्त-पानप्रदान-विश्रामणादिना वैयावृत्त्यं करिष्यामि । एवंकुर्वता तीर्थस्यानुसज्जना—अनुवर्त्तना कृता भवति, भक्तिश्च भगवतां तीर्थकृतां कृता भवति, "जे गिलाणं पडियरइ से ममं णाणेणं दंसणेणं चरित्तेणं पडिवज्जइ" ( भगवतीसूत्र श० पत्र ) इत्यादिभगवदाज्ञाऽऽराधनात् । इत्थं तेनोक्ते यदि ते स्वयमेव ग्लानवैयावृत्त्यं कर्तुं प्रभवन्ति ततो ब्रुवते—आर्य ! व्रजतु यथास्थानं भवान्, वयं ग्लानस्य

१ °थुः प्रथ° त० डे० कां० ॥ २ °भावेन गता° त० डे० कां० ॥

सकलमपि वैयावृत्त्यं कुर्वाणाः स इति ॥ १८७७ ॥ १८७८ ॥

अथ ते न प्रभवन्ति यदि वाऽसावेवंविधगुणोपेतो वर्त्तते—

[1]संजोगदिट्ठपाढी, तेणुवलद्धा व दव्वसंजोगा ।
सत्थं व तेणऽधीयं, वेज्जो वा सो पुरा आसि ॥ १८७९ ॥

संयोगाः—औषधद्रव्यमीलनप्रयोगास्तद्विषयो दृष्टः पाठः—चिकित्साशास्त्रावयवविशेषो येन स संयोगदृष्टपाठः, आर्षत्वाद् गाथायामिन्प्रत्ययः, यदि वा तेन द्रव्यसंयोगाः कुतोऽपि सातिशय-ज्ञानविशेषादुपलब्धाः, 'शास्त्रं वा' चरक-सुश्रुतादिकं सकलमपि तेनाधीतम्, वैद्यो वा सः 'पुरा' पूर्वं गृहाश्रम आसीत्, ततो न विसर्जनीयः ॥ १८७९ ॥

अत्थि य सें योगवाही, गेलन्नतिगिच्छणाएँ सो कुसलो ।
सीसे वावारेत्ता, तेगिच्छं तेण कायव्वं ॥ १८८० ॥

यदि 'तस्य' आगन्तुकस्य गच्छे योगवाहिनः सन्ति, स च स्वयं ग्लान्यचिकित्सायां कुशलः, ततः शिष्यान् सूत्रार्थपौरुषीप्रदानादौ व्यापार्य स्वयं तेन ग्लानस्य 'चैकित्स्यं' चिकित्साकर्म कर्त्त-व्यम् । उपलक्षणमिदम्, तेन कुल-गण-सङ्घप्रयोजनेषु गुरुकार्यप्रेषणे वस्त्र-पात्राद्युत्पादने वा यो यत्र योग्यस्तं तत्र व्यापार्य सर्वप्रयत्नेन स्वयं ग्लानस्य चिकित्साकर्म कर्त्तव्यम् ॥ १८८० ॥

सूत्रार्थपौरुषीव्यापारणे विधिमाह—

दाऊणं वा गच्छइ, सीसेण व वायएहि वा वाए ।
तत्थऽन्नत्थ व काले, सोहिएँ सव्वुद्दिसइ हट्ठे ॥ १८८१ ॥

सूत्रार्थपौरुष्यौ दत्त्वा ग्लानस्य समीपं गच्छति, गत्वा च चिकित्सां करोति । अथ दूरे ग्लानस्य प्रतिश्रयस्ततः सूत्रपौरुषीं दत्त्वा अर्थपौरुषीं शिष्येण दापयति । अथ दवीयान् स प्रतिश्रयस्ततो द्वे अपि पौरुष्यौ शिष्येण दापयति । अथात्मीयः शिष्यो वाचनां दातुमशक्तस्ततो येषां वाचकानाम्—आचार्याणां स ग्लानस्तैः सूत्रमर्थं वा स्वशिष्यान् वाचयति । अथ तेषामपि नास्ति वाचनाप्रदाने शक्तिस्ततो यदि तेऽनागाढयोगवाहिनस्तदा तेषां योगो निक्षिप्यते । ( ग्रन्थाग्रम्–२००० । सर्वग्रन्थाग्रम्–१४२२० ) अथागाढयोगवाहिनस्ततोऽयं विधिः— "तत्थऽन्नत्थ व" इत्यादि । यत्र क्षेत्रे स ग्लानस्तत्रान्यत्र वा क्षेत्रे स्थितास्ते आगाढयोगवाहिन आचार्येण वक्तव्याः, यथा—आर्याः ! कालं शोधयत । ततस्तैर्यथावत् कालग्रहणं कृत्वा यावतो दिवसान् कालः शोधितस्तावतां दिवसानामुद्देशनकालान् सर्वानप्याचार्यो ग्लाने 'हृष्टे' प्रगुणी-भूते सति एकदिवसेनैवोद्दिशति, यावन्ति पुनर्दिनानि कालग्रहणे प्रमादः कृतो गृह्यमाणे वा कालो न शुद्धः तेषामुद्देशनकाला न उद्दिश्यन्ते ॥ १८८१ ॥

तत्र क्षेत्रे संस्तरणाभावेऽन्यत्र गच्छतां विधिमाह—

निग्गमणे चउभंगो, अद्धा सव्वे वि निंति दोण्हं पि ।
भिक्ख-वसहीइ असती, तस्साणुमए ठविज्जा उ ॥ १८८२ ॥

ततः क्षेत्राद् निर्गमने चतुर्भङ्गी भवति । गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात् । वास्तव्याः

१ गाथेयं चूर्णौ विशेषचूर्णौ च "अत्थि य०" गाथानन्तरं वर्तते ॥ २ ग्लानचि° मो० ले० विना ॥

संस्तरन्ति नागन्तुकाः १ आगन्तुकाः संस्तरन्ति न वास्तव्याः २ न वास्तव्या न चागन्तुकाः संस्तरन्ति ३ वास्तव्या अप्यागन्तुका अपि संस्तरन्ति ४ । तत्र यत्र द्वयेऽपि संस्तरन्ति तत्र विधिः प्रागेवोक्तः । यत्र तु न संस्तरन्ति तत्रायं विधिः—प्रथमभङ्गे आगन्तुकानां द्वितीयभङ्गे वास्तव्यानामर्द्धं वा यावन्तो वा न संस्तरन्ति तावन्तो निर्गच्छन्ति, तृतीयभङ्गे द्वयोरपि वर्गयोरर्द्धाः सर्वे वा ग्लानं सप्रतिचरकं मुक्त्वा निर्गच्छन्ति । एवं भिक्षाया वसतेश्च 'असति' अभावे निर्गमनं द्रष्टव्यम् । के पुनस्तत्र ग्लानसन्निधौ स्थापनीयाः ? इत्याह—'तस्य' ग्लानस्य ये 'अनुमताः' अभिप्रेतास्तान् प्रतिचरकान् ग्लानस्य समीपे स्थापयेत् ॥ १८८२ ॥

गतं श्रद्धावानिति द्वारम् । अथेच्छाकारद्वारमाह—

अभणितो कोइ न इच्छइ, पत्ते थेरेहिँ होउवालंभो ।
दिट्ठंतो महिड्ढीए, सवित्थरारोवणं कुज्जा ॥ १८८३ ॥
बहुसो पुच्छिज्जंता, इच्छाकारं न ते मम करिंति ।
पडिमुंडणा य दुक्खं, दुक्खं च सलाहिउं अप्पा ॥ १८८४ ॥

कोऽपि साधुर्वैयावृत्त्यकुशलः, परमन्येन 'अभणितः' 'आर्य ! एहि इच्छाकारेण ग्लानस्य वैयावृत्त्यं कुरु' इत्यनुक्तः सन् नेच्छति वैयावृत्त्यं कर्त्तुम्, स च श्रुत्वाऽपि ग्लानं न तस्य समीपं गतः । कुल-गण-सङ्घस्थविराश्च ये कारणभूताः पुरुषाः 'कुत्र सामाचार्यः सीदन्ति ? कुत्र चोत्सर्पन्ति ?' इति प्रतिचरणाय गच्छान्तरेषु पर्यटन्ति ते तत्र प्राप्ताः, तैश्च स पृष्टः—आर्य ! उत्सर्पन्ति ते ज्ञान-दर्शन-चारित्राणि ? सन्ति वा केचित् प्रत्यासन्नपरिसरे साधवो ग्लानो वा कुत्रापि भवता श्रुतः ? इति । स प्राह—इतः प्रत्यासन्न एव ग्रामे सन्ति साधवः, तेषां चास्त्येको ग्लान इति । ततस्तैस्तस्योपालम्भः प्रदत्तः—यदि तेषां ग्लानो वर्त्तते ततस्त्वं तस्य प्रतिचरणाय किं न गतः ? । स प्राह—'बहुशः' भूयो भूयः पृच्छ्यमाना अपि ते साधवः कदापि ममेच्छाकारं न कुर्वन्ति, अन्यच्च अहमनभ्यर्थितस्तत्र गतः, तैश्च प्रतिमुण्डितः—निषिद्धः, यथा—पूर्णं भवता वैयावृत्त्यकरेणेति, एवं प्रतिमुण्डनया महद् मानसं दुःखमुत्पद्यते, 'यादृशं चाहं ग्लानस्य वैयावृत्त्यं करोमि ईदृशमन्यः कोऽपि न वेत्ति' एवमात्मानं श्लाघितुं 'दुःखं' दुष्करं भवति, अतः कथमनभ्यर्थितस्तत्र गच्छामि ? इति ।

ततः स्थविरैस्तस्य पुरतो महर्द्धिको राजा तस्य दृष्टान्तः कृतः । यथा—

एगो राया कत्तियपुण्णिमाए मरुयाणं दाणं देइ । एगो मरुगो चोद्दसविज्जाठाणपारगो भोइयाए भणिओ—तुमं सव्वमरुगाहिवो, वच्च रायसमीवं, उत्तमं ते दाणं दाहिइ त्ति । सो मरुओ भणाइ—एगं ताव रायकिव्विसं गिण्हामि, बिइयं अणिमंतिओ गच्छामि, जइ से पिति-पितामहस्स अणुग्गहेण पओअणं तो मं आगंतुं तत्थ नेहिइ, इह ठियस्स वा मे दाहिइ । भोइयाए भणिओ—तस्स अत्थि बहू मरुगा तुज्झ सरिच्छा अणुग्गहकारिणो, जइ अप्पणो तद्दविणेण कज्जं तो गच्छ । जहा सो मरुओ अब्भत्थणं मग्गंतो इहलोइयाणं कामभोगाणं अणाभागी जाओ, एवं तुमं पि अब्भत्थणं मग्गंतो निज्जरालाहस्स अणाभागी भविस्ससि ॥

१ °म् । ये च 'तस्य' ग्लानस्य 'अनु° मो० ले० विना ॥ २ परिमुंडणा ता० ॥

इत्थमुपालभ्य[1] चतुर्गुरुकारोपणां 'सविस्तरां' परितापनादिप्रायश्चित्तविस्तरयुक्तां तस्य प्रयच्छन्ति ॥ १८८३ ॥ १८८४ ॥ गतमिच्छाकारद्वारम् । अथाशक्तद्वारमाह—

किं काहामि वराओ, अहं खु ओमाणकारओ होहं ।
एवं तत्थ भणंते, चाउम्मासा भवे गुरुगा ॥ १८८५ ॥

कोऽपि साधुः कुल-गण-सङ्घस्थविरैस्तथैव पृष्टः प्राह—क्षमाश्रमणाः ! लोके यः सर्वथा अशक्तः—पङ्गुप्रायः स वराक उच्यते, सोऽहं वराकस्तादृशस्तत्र गतः किं करिष्यामि ? नवरमहं तत्र प्राप्तोऽवमानकारको भविष्यामि । एवं तत्र स्थविराणां पुरतो भणतस्तस्य चतुर्मासा गुरवो भवन्ति ॥ १८८५ ॥ स च स्थविरैरित्थमभिधातव्यः—

उव्वत्त-खेल-संथार-जग्गणे पीस-भाणधरणे य ।
तस्स पडिजग्गयाण व, पडिलेहेउं पि सि असत्तो ॥ १८८६ ॥

आर्य ! किं ग्लानस्योद्वर्त्तनमपि कर्तुं न शक्नोषि ? एवं खेलमल्लकस्य भस्मना भरणं भस्मपरिष्ठापनं वा संस्तारकस्य रचनं जागरणं—रात्रौ प्रहरकप्रदानं पेषणम्—औषधीनां चूर्णनं भाणधरणं—सपान-भोजनभाजनानां धारणं 'तस्य' ग्लानस्य प्रतिजागरकाणां वा साधूनामुपधिमपि प्रत्युपेक्षितुमशक्तः ? येनेदं ब्रवीषि—किं करिष्यामि वराकोऽहम् ? इति ॥ १८८६ ॥

अथ सुखितद्वारमाह—

सुहिया मो त्ति य भणती, अच्छह वीसत्थया सुहं सव्वे ।
एवं तत्थ भणंते, पायच्छित्तं भवे तिविहं ॥ १८८७ ॥

एकत्र क्षेत्रे मासकल्पस्थितैः साधुभिः श्रुतम्—अमुकत्र ग्लान इति । तत्र केऽपि साधवो भणन्ति—ग्लानं प्रतिजागरका व्रजामो वयम् । इतरः कोऽपि[2] भणति—सुखितानस्मान् दुःखितान् कुरुत, यूयमपि सर्वे 'विश्वस्ताः' निरुद्विग्नाः 'सुखं' सुखेन तिष्ठत, किं तत्र गत्वा मुधैव दुःखस्यात्मानं प्रयच्छामः ? किं युष्माकमयं श्लोको न कर्णकोटरमुपागमत् ? । यथा—

सर्वस्य सर्वकारी, स्वार्थविघाती परस्य हितकारी ।
सर्वस्य च विश्वासी, मूर्खो[3] यो नाम विज्ञेयः ॥

एवं तत्र तस्य भणतस्त्रिविधं प्रायश्चित्तं भवति । तद्यथा—यद्याचार्य एवं ब्रवीति ततश्चतुर्गुरु, उपाध्यायो ब्रवीति चतुर्लघु, भिक्षुर्ब्रवीति मासगुरु ॥ १८८७ ॥ अथापमानद्वारमाह—

भत्तादिसंकिलेसो, अवस्स अम्हे वि तत्थ न तरामो ।
काहिंति केत्तियाणं, तेणं चिय तेसु अद्दभा ॥ १८८८ ॥
अम्हेहिँ तहिँ गएहिं, ओमाणं उग्गमाइणो दोसा ।
एवं तत्थ भणंते, चाउम्मासा भवे गुरुगा ॥ १८८९ ॥

तथैव ग्लानं श्रुत्वा केचिद् भणन्ति—व्रजामो ग्लानप्रतिजागरणार्थम् । अपरे ब्रुवते—तत्राऽन्येऽपि ग्लानं श्रुत्वा बहवः प्रतिचारकाः समायाता भविष्यन्ति ततो महान् भक्त-पानादि-

---

१ °लभ्य यदि प्रत्यावर्तते तदा चतु° भा० ॥ २ °पि ब्रूते—सु° भा० ॥ ३ मूर्खार्यो नाम भा० कां० चूर्णौ च ॥

सौख्यो भविता, 'अवयवम्' असन्दिग्धं वयमपि तत्र गताः 'न तरामः' न निर्वहामः, ग्लान-प्रतिचारणार्थमागतानां कियतां वा ते वास्तव्या विश्रामणादि प्राघूर्णककर्म करिष्यन्ति ? यतः ते 'तेनैव' ग्लानेन 'तेषु' कार्येषु 'अद्धाः' आकुलीभूताः ॥ १८८८ ॥ तथा—

अस्माभिरपि तत्र गतैर्नियमाद् 'अवमानम्' अवमम् 'उद्गमदोषाश्च' आधाकर्म-मिश्रजात-प्रभृतयः आदिशब्दादेषणादोषाश्च भविष्यन्ति । एवं तत्र तेषां भणतां चत्वारो मासा गुरुका भवेयुः ॥ १८८९ ॥ अथ लुब्धद्वारमाह—

अम्हे मो निज्जरट्ठी, अच्छह तुब्भे वयं से काहामो ।
अत्थि य अभाविया णे, ते वि य णाहिंति काऊण ॥ १८९० ॥

मासकल्पस्थितैः साधुभिः श्रुतम्, यथा—अमुकत्र ग्रामे ग्लानः सञ्जातोऽस्ति । तच्च क्षेत्रं वसति-पानक-गोरसादिभिः सर्वैरपि गुणैरुपेतम्, ततस्ते लोभाभिभूतचेतसश्चिन्तयन्ति—'ग्लान-मिषमन्तरेण न शक्यते क्षेत्रमिदं प्रेरयितुम्, अतो गच्छामो वयम्' इति चिन्तयित्वा तत्र गत्वा भणन्ति—वयं 'निर्जरार्थिनः' ग्लानवैयावृत्त्यकरणेन कर्मक्षयमभिलषमाणा इहायाताः स्मः, अतो यूयं तिष्ठथ वयं "से" तस्य ग्लानस्य वैयावृत्त्यं करिष्यामः, सन्ति चास्माकमभाविताः शैक्षा-स्तेऽपि चास्मान् वैयावृत्त्यं कुर्वतो दृष्ट्वा ज्ञास्यन्ति ॥ १८९० ॥

ग्लानमि-षेण क्षेत्रं प्रेरयतां प्रायश्चि-त्तानि

एवं गिलाणलक्खेण संठिया पाहुण त्ति उक्कोसं ।
मग्गंता चमढिंती, तेसिं चारोवणा चउहा ॥ १८९१ ॥

एवं ग्लानसम्बन्धि यद् लक्ष्यं–मिषं तेन तत्र संस्थिताः सन्तः प्राघूर्णका इति कृत्वा लोकाद् 'उत्कृष्टं' स्निग्ध-मधुरद्रव्यं लभन्ते, अथ न स्वयं लोकः प्रयच्छति ततः 'मार्गयन्तः' 'प्राघूर्णका वयम्' इति मिषेणावभाषमाणास्तत् क्षेत्रं चमढयन्ति, चमढिते च क्षेत्रे ग्लानप्रायोग्यं न लभ्यते ततस्तेषामियं चतुर्विधाऽऽरोपणा कर्त्तव्या । तद्यथा—द्रव्यतः क्षेत्रतः कालतो भावतश्च ॥ १८९१ ॥

तत्र द्रव्यतस्तावदाह—

फासुगमफासुगे वा, अचित्त चित्ते परित्तऽणंते य ।
असिणेह-सिणेहकए, अणहारा-ऽऽहार लहु-गुरुगा ॥ १८९२ ॥

क्षेत्रोद्धेजनादोषेण ग्लानप्रायोग्यमलभमाना यदि प्राशुकमवभाषन्ते परिवासयन्ति वा ततश्च-त्वारो लघुकाः । अथाप्राशुकमवभाषन्ते परिवासयन्ति वा ततश्चत्वारो गुरुकाः । इह च प्राशु-कमेषणीयम् अप्राशुकमनेषणीयम् । ◁ आह च निशीथचूर्णिकृत्—

इह फासुगं एसणिज्जं ति । ▷

अचित्ते अवभाष्यमाणे परिवास्यमाने वा चतुर्लघु । सचित्ते चतुर्गुरु । एवं परीत्ते चतुर्लघु । अनन्ते चतुर्गुरु । अस्नेहे चतुर्लघु । सस्नेहे चतुर्गुरु । अनाहारे चतुर्लघु । आहारे चतुर्गुरु ॥ १८९२ ॥ उक्तं द्रव्यनिष्पन्नं प्रायश्चित्तम् । अथ क्षेत्रनिष्पन्नमाह—

गुरुगस्स कंबलसो, चाउम्मासा हवंति उग्घाता ।
बहिया य अणुग्घाया, दव्वालंभे पसज्जणया ॥ १८९३ ॥

१ °न सुष्ठु–अतीव अद्धाः–आकुलीकृताः भा० ॥ २ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥

उत्कृष्टद्रव्यलोभेन क्षेत्रमुद्वेजयतो लुब्धस्य क्षेत्राभ्यन्तरतो ग्लानप्रायोग्येऽलभ्यमाने चत्वारो मासा उद्घाताः । क्षेत्रस्य बहिरलभ्यमाने त एव चत्वारो मासाः 'अनुद्घाताः' गुरवः । अत्र च ग्लानप्रायोग्यस्य द्रव्यस्यालाभे 'प्रसजना' प्रायश्चित्तस्य वृद्धिः प्राप्नोति ॥ १८९३ ॥

कथम् ? इत्याह—

खेत्तबहि अद्धजोअण, वुड्ढी दुगुणेण जाव बत्तीसा ।
चउगुरुगादी चरिमं, खेत्ते काले इमं होइ ॥ १८९४ ॥

क्षेत्राद् बहिरर्द्धयोजनं गत्वा ततो यदि ग्लानप्रायोग्यं द्रव्यमानयति तदा चतुर्गुरव एव । योजनादानयति षड् लघवः । योजनद्वयादानयति षड् गुरवः । योजनचतुष्टयादानयति च्छेदः । योजनाष्टकादानयति मूलम् । योजनषोडशकादानयति अनवस्थाप्यम् । द्वात्रिंशद् योजनानि गत्वा ग्लानप्रायोग्यमानयति पाराञ्चिकम् । अत एवाह—क्षेत्रबहिरर्द्धयोजनादारभ्य द्विगुणेन परिमाणेन क्षेत्रस्य वृद्धिस्तावत् कर्तव्या यावद् द्वात्रिंशद् योजनानि । एषु च चतुर्गुरुकादिकं 'चरमं' पाराञ्चिकं यावत् प्रायश्चित्तम् । इत्थं क्षेत्रविषयं प्रायश्चित्तमुक्तम् । 'काले' कालविषयम् 'इदं' वक्ष्यमाणं भवति ॥ १८९४ ॥ तत्र तावत् प्रकारान्तरेण क्षेत्रनिष्पन्नमेवाह—

अंतो बहिं न लब्भइ, ठवणा फासुग महय मुच्छ किच्छ कालगए ।
चत्तारि छ च लहु-गुरु, छेदो मूलं तह दुगं च ॥ १८९५ ॥

क्षेत्रस्यान्तर्वा बहिर्वा ग्लानप्रायोग्यं न लभ्यत इति कृत्वा प्राशुकस्य 'स्थापनां' परिवासनां करोति चतुर्लघु । तेन परिवासितेन भक्तेन ग्लानो यद्यनागाढं परिताप्यते ततश्चतुर्गुरुकम् । महतीं दुःखासिकामाप्नोति षड्लघु । मूर्च्छामूर्च्छे षड्गुरु । कृच्छ्रप्राणे च्छेदः । कृच्छ्रोच्छ्वासे मूलम् । समवहते—मारणान्तिकसमुद्घातं कुर्वाणे ग्लानेऽनवस्थाप्यम् । कालगते पाराञ्चिकम् । ॥ १८९५ ॥ अथ कालनिष्पन्नमाह—

पढमं राइ ठविंते, गुरुगा बिइयादिसत्तहिं चरिमं ।
परितावणाइ भावे, अप्पत्तिय-कूवणाईया ॥ १८९६ ॥

प्रथमां रात्रिं परिवासयतश्चतुर्गुरुकाः । द्वितीयां रात्रिमादौ कृत्वा सप्तमी रात्रिभिश्चरमम् । तद्यथा—द्वितीयां रजनीं[1] परिवासयति षड् लघवः, तृतीयस्यां षड् गुरवः, चतुर्थ्यां छेदः, पञ्चम्यां मूलम्, षष्ठ्यामनवस्थाप्यम्, सप्तम्यां पाराञ्चिकम् । अथ भावनिष्पन्नमाह—"परितावणाइ" इत्यादि पश्चार्द्धम् । परितापनादि भावनिष्पन्नं मन्तव्यम् । तथा स परितापितः सन्नप्रीतिकं करोति चतुर्लघु, कूजनं—सशब्दाक्रन्दनम्, आदिग्रहणाद् 'अनाथोऽहम्, न किमप्यमी मह्यं प्रयच्छन्ति' इत्येवमुड्डाहं कुर्यात् ततश्चतुर्गुरुकम् ॥ १८९६ ॥

अथ परितापनादिपदं व्याख्यानयति—

अंतो बहिं न लब्भइ, परितावण महय मुच्छ किच्छ कालगए ।
चत्तारि छ च लहु-गुरु, छेदो मूलं तह दुगं च ॥ १८९७ ॥

क्षेत्रस्यान्तर्बहिर्वा न लभ्यते इति कृत्वा ग्लानस्यानागाढा परितापना भवति चतुर्लघु ।

---

[1] रात्रिं परि° मा० ॥

आगाढपरितापनायां चतुर्गुरु । दुःखादुःखे षड्लघु । मूर्च्छामूर्च्छे षड्गुरु । कृच्छ्रप्राणे च्छेदः । कृच्छ्रोच्छ्वासे मूलम् । समवहते अनवस्थाप्यम् । कालगते पाराञ्चिकम् ॥ १८९७ ॥

एवं तावदाहारविषयमुक्तम् । अथोपधिविषयमभिधीयते—

**अंतो बहिं न लब्भइ, संथारग महय मुच्छ किच्छ कालगए ।**
**चत्तारि छ च लहु-गुरु, छेदो मूलं तह दुगं च ॥ १८९८ ॥**

अतिचमदिते क्षेत्रेऽन्तर्वा बहिर्वा संस्तारको न लभ्यते ततो ग्लानस्यानागाढपरितापनादिषु चतुर्लघुकादिकं तथैव प्रायश्चित्तं द्रष्टव्यम् ॥ १८९८ ॥

अत्र परितापनापदं समुद्घातपदं च गाथायां साक्षान्नोक्तम्, अतो मा भूद् मुग्धमतिविनेयवर्गस्य व्यामोह इति कृत्वा साक्षात् तदभिधानार्थमिमां गाथामाह—

**परिताव महादुक्खे, मुच्छामुच्छे य किच्छपाणगते ।**
**किच्छुस्सासे य तहा, समुघाए चेव कालगते ॥ १८९९ ॥**

गतार्था ॥ १८९९ ॥ उक्तं लुब्धद्वारम् । अथानुवर्त्तनाद्वारमाह—

अनुवर्त्तना-द्वारम्

**अणुयत्तणा गिलाणे, दव्वट्ठा खलु तहेव विज्जट्ठा ।**
**असतीइ अन्नओ वा, आणेउं दोहि वी कुज्जा ॥ १९०० ॥**

ग्लानप्रायोग्यं यद् भक्त-पानादिकं द्रव्यं स एवार्थः—प्रयोजनं द्रव्यार्थस्तमुत्पादयद्भिर्ग्लानस्यानुवर्त्तना कर्त्तव्या । "तहेव विज्जट्ठे"ति तथैव वैद्यस्यार्थमुत्पादयद्भिर्ग्लानस्यानुवर्त्तना विधेया । यदि स्वग्रामे द्रव्य-वैद्ययोरभावस्ततोऽन्यग्रामादपि द्रव्य-वैद्यावानीय द्वाभ्यामप्यनुवर्त्तनां कुर्यात् ॥ १९०० ॥ अथैनामेव गाथां व्याचिख्यासुराह—

**जायंते उ अपत्थं, भणंति जायामों तं न लब्भइ णे ।**
**विणियट्टणा अकाले, जा वेल न बेंति उ न देमो ॥ १९०१ ॥**

ग्लानो यद्यपथ्यं द्रव्यं याचते ततः साधवो भणन्ति—वयं याचामः परं किं कुर्महे ? तद् भवतामभिप्रेतं भूयोभूयः पर्यटद्भिरपि न लभ्यते "णे" अस्माभिः; इत्थं भणद्भिर्ग्लानोऽनुवर्त्तितो भवति । यद्वा ग्लानस्याग्रतः पात्रकाण्युद्ग्राह्य प्रतिश्रयान्निर्गत्यापान्तरालपथाद् 'विनिवर्त्तनां' प्रत्यागमनं कुर्वन्ति, तस्य पुरतश्चेत्थं ब्रुवते—वयं गता अमूम परं न लब्धम्; अकाले वा गत्वा याचन्ते येन न लभ्यते । अकाले च याचमानं ग्लानं ब्रुवते—यावद् वेला भवति तावत् प्रतीक्षस्व, ततो वयमानीय दास्याम इति, न पुनर्ब्रुवते—न दद्मो वयमिति ॥ १९०१ ॥

अथ क्षेत्रतो ग्लानस्यानुवर्त्तनामाह—

**तत्थेव अन्नगामे, वुत्थंतरऽसंथरंत जयणाए ।**
**असंथरणेसणमादी, छन्नं कडजोगि गीयत्थे ॥ १९०२ ॥**

प्रथमतस्तत्रैव ग्रामे ग्लानप्रायोग्यमन्वेषणीयम् । तत्र यदि न लभ्यते तदाऽन्यग्रामेऽपि । अथासावन्यग्रामो दूरतरस्ततः "वुत्थंतर" त्ति 'अन्तरा' अपान्तरालग्रामे उषित्वा द्वितीये दिने आनयन्ति । अथैवमप्यसंस्तरणं भवति ततः "संथरंत जयणाए" त्ति अकारप्रश्लेषादसंस्तरतो

१ परं तद् भा० ॥

ग्लानस्यार्थाय 'यतनया' पञ्चकपरिहाण्या गृह्णन्ति । अथ ग्लानार्थं व्यापृतानां प्रतिचरकाणामसंस्तरणं ततः "एसणमाइ" त्ति एषणादोषेषु आदिशब्दाद् उद्गमादिदोषेषु च पञ्चकपरिहाण्या यतितव्यम् । अथ प्रतिदिवसं ग्लानप्रायोग्यं न लभ्यते ततः 'छन्नम्' अप्रकटं कृतयोगी गीतार्थो वा तत्प्रायोग्यं द्रव्यं परिवासयति । इह आकर्णितच्छेदश्रुतार्थः प्रत्युच्चारणाऽसमर्थः कृतयोगी । यस्तु च्छेदश्रुतार्थं श्रुत्वा प्रत्युच्चारयितुमीशः स गीतार्थ उच्यते । एष द्वारगाथासमासार्थः ॥ १९०२ ॥ अथैनामेव विवरीषुराह—

**पडिलेह पोरुसीओ, वि अकाउं मग्गणा उ सग्गामे ।**
**खित्तंतो तद्दिवसं, असइ विणासे व तत्थ वसे ॥ १९०३ ॥**

अपिशब्दः सम्भावनायाम् । यदि सुलभं द्रव्यं ततः प्रत्युपेक्षणां सूत्रार्थपौरुष्यौ च कृत्वा स्वग्रामेऽनवभाषितस्य मार्गणा कर्त्तव्या । अथैवं न लभ्यते ततोऽर्थपौरुषीं हापयित्वा, यद्येवमपि न लभ्यते ततः सूत्रपौरुषीं परिहाप्योत्पादनीयम् । अथ तथापि न लभ्यते दुर्लभं वा तद् द्रव्यं ततः प्रत्युपेक्षणां द्वे अपि च पौरुष्यौ अकृत्वा स्वग्रामेऽनवभाषितं मार्गयन्ति । अथ स्वग्रामेऽनवभाषितं न लभ्यते ततः 'क्षेत्रान्तः' सक्रोशयोजनक्षेत्राभ्यन्तरे परग्रामे पौरुषीद्वयमपि कृत्वा अनवभाषितमुत्पादयन्ति, अत्राप्यर्थपौरुष्यादिहापना तथैव द्रष्टव्या । अथ तत्राप्यनवभाषितं न लभ्यते ततः स्वक्षेत्रे स्वग्राम-परग्रामयोरवभाषितमुत्पाद्य तद्दिवसमानयन्ति । अथ स्वक्षेत्रे तद्दिवसं न प्राप्यते ततः परक्षेत्रादपि तद्दिवसमानेतव्यम् । अथ क्षेत्रबहिर्वर्त्तिनो यतो ग्रामादेरानीयते तद् न प्रत्यासन्नं किन्तु दूरतरं न तद्दिवसं गत्वा ततः प्रत्यायातुं शक्यते, विनाशि वा तद् द्रव्यं दुग्धादिकम्; ततः प्रत्यासन्नग्रामस्यासति विनाशिनि वा द्रव्ये ग्रहीतव्ये अपराह्णे गत्वा तत्र रात्रौ वसेत्, उषित्वा च सूर्योदयवेलायां गृहीत्वा द्वितीये दिने तत्रानयन्ति । अथ दवीयस्तरं तत् क्षेत्रमविनाशि द्रव्यं च ग्रहीतव्यम् ततोऽपान्तरालग्रामे रजन्यामुषिताः सूर्योदये तत्र गत्वा तद् द्रव्यं गृहीत्वा भूयः समागच्छन्ति ॥ १९०३ ॥ एतदेवाह—

**खित्तबहिया व आणे, विसोहिकोडिं वतिच्छितो काढे ।**
**पइदिवसमलब्भंते, कम्मं समइच्छिओ ठवए ॥ १९०४ ॥**

क्षेत्रबहिर्वा गत्वा प्रथममनवभाषितं ततोऽवभाषितं पूर्वं तद्दिवसे ततो द्वितीयेऽपि दिवसेऽनन्तरोक्तया नीत्या यथायोगमानयेत् । एष विधिरेषणीयविषयो भणितः । अथैषणीयेन नासौ ग्लानः संस्तरति ततः सक्रोशयोजनक्षेत्रस्यान्तः स्वग्राम-परग्रामयोः पञ्चकपरिहाण्या तदप्राप्तौ क्षेत्रबहिरपि पञ्चकपरिहाण्या तद्दिवसं ग्लानप्रायोग्यमुत्पादयन्ति । एवं यदा प्रायश्चित्तानुलोम्येन क्रीतकृताऽभ्याहृतादिकां विशोधिकोटीं[2] व्यतिक्रान्तो भवति तदा "काढे" त्ति ग्लानयोग्यमौषधादिकमन्येन स्वयं वा यतनया क्वाथयेत् । एवं प्रतिदिवसमलभ्यमाने यदा आधाकर्मापि समतिक्रान्तो[3] भवति, तदपि प्रतिदिवसं न प्राप्यत इत्यर्थः, ततो विशुद्धमविशुद्धं वा ग्लानप्रायोग्यं द्रव्यमुत्पाद्य

---

१ ततः क्षेत्रान्तः क्षेत्रबहिर्वा पञ्चकपरिहाण्या यदा क्रीतकृताऽभ्याहृतादिकां भा० कां० ॥
२ °कोटीमति° मो० ले० विना ॥ ३ °क्रान्तः, तद्° मो० ले० विना ॥

स्थापयेत् । ये तु ग्लानस्य प्रतिचरकास्ते यदि ग्लानकार्यव्याप्रुताः परक्षेत्रं वा व्रजन्तः स्वार्थमहिण्डमाना न संस्तरन्ति तत एषणादिदोषेषु पञ्चकपरिहाणियतनया गृह्णन्ति ॥ १९०४ ॥

यत् तद् ग्लानार्थं परिवास्यते तत् कीदृशे स्थाने स्थाप्यते? इत्याह—

> उव्वरगस्स उ असती, चिलिमिणि उभयं च तं जह न पासे ।
> तस्सऽसइ पुराणादिसु, ठविंति तद्दिवस पडिलेहा ॥ १९०५ ॥

कृतयोगिना गीतार्थेन वा तद् अन्यस्मिन् गृहापवरके स्थापनीयम् । अथ नास्ति पृथगपवरकस्ततो वसतावेव योऽपरिभोग्यः कोणकस्तत्र चिलिमिलिकया आवृत्य 'उभयं' ग्लाना-ऽगीतार्थलक्षणं यथा न पश्यति तथा स्थाप्यम् । यदि ग्लानस्तत् पश्यति तदा स यदा तदा तस्याभ्यवहारं कुर्वीत । अगीतार्थस्य तु तद् दृष्ट्वा विपरिणामा-ऽप्रत्ययादयो दोषा भवेयुः । "तस्सऽसइ" त्ति 'तस्य' अपरिभोग्यस्थानस्याभावे पुराणः—पश्चात्कृतस्तस्य गृहे आदिशब्दाद् मातापितृसमानेषु गृहेषु स्थापयन्ति । तस्य च तत्र स्थापितस्य तद्दिवसं प्रत्युपेक्षणा कर्तव्या । तद्दिवसं नाम प्रतिदिनम् । यदुक्तं देश्याम्— तद्दिवसं अणुदिअहे ( वर्ग ५ गा० ८ ) इति । ॥ १९०५ ॥

अथ "आणेउं दोहि वी कुज्जा" ( गा० १९०० ) इत्यस्य व्याख्यानमाह—

> फासुगमफासुगेण व, अचित्तेतर परित्तऽणंतेणं ।
> आहार-तद्दिणेतर, सिणेह इअरेण वा करणं ॥ १९०६ ॥

प्रासुकेन अप्रासुकेन वा अचित्तेन 'इतरेण वा' सचित्तेन परीत्तेन अनन्तेन वा आहारेण अनाहारेण वा तद्दैवसिकेन 'इतरेण वा' परिवासितेन सस्नेहेन 'इतरेण वा' अस्नेहेन ग्लानस्य चिकित्सायाः करणमनुज्ञातम् ॥ १९०६ ॥

गता ग्लानानुवर्तना । अथ वैद्यानुवर्तनामभिधित्सुः प्रस्तावनां रचयन्नाह—

> विज्जं न चेव पुच्छह, जाणंता बिंति तस्स उवदेसो ।
> दट्ठ-पिलगाइएसु व, अजाणगा पुच्छए विज्जं ॥ १९०७ ॥

ग्लानो ब्रूयात्—यूयं वैद्यं नैव पृच्छथ, आत्मच्छन्देनैव प्रतिचरणं कुरुथ । ततो यदि साधवो जानन्तः—चिकित्सायां कुशलास्ततो ब्रुवते—अस्माभिर्वैद्यः प्रागेव पृष्टस्तस्यैवायमुपदेश इति । यद्वा प्रतिश्रयान्निर्गत्य कियन्तमपि भूभागं गत्वा मुहूर्तमात्रं तत्र स्थित्वा समागत्य ब्रुवते—अयं वैद्येनोपदेशो दत्त इति । तथा दष्टं—सर्पदष्टः पिलगं—गण्डः आदिग्रहणेन शीतलिका दुष्टवातो वेत्यादिपरिग्रहः, एतेष्वपि यदि ज्ञास्ततः स्वयमेव कुर्वन्ति । अथाज्ञास्ततो वैद्यं पृच्छन्ति ॥ १९०७ ॥ अत्र शिष्यः पृच्छति—

> किह उप्पण्णो गिलाणो, अट्ठम उम्होदगाइया वुड्ढी ।
> किंचि बहु मगमद्दे, ओमे जुत्तं परिहरंतो ॥ १९०८ ॥

---

१ °त्—परिवास्यते । ये च ग्ला° भा० कां० ॥ २ ओयर° ता० ॥ ३ °क कोणेन चिलिमिलिक्या वा आ° भा० ॥ ४ हेमचन्द्रीयदेशीनाममालायामित्यर्थः ॥ ५ "दट्ठु त्ति सप्पदट्ठादि, पिलगं फोडिया, आदिग्गहणेणं गंडादि" इति चूर्णौ । "दट्ठु त्ति सप्पदट्ठाइ, पिलगं गंडं, आदिग्गहणेणं फोडिया" इति विशेषचूर्णौ ॥

‘कथं ?’ केन हेतुना ग्लान उत्पन्नः ? इति । सूरिराह—भूयांसः खलु रोगातङ्का यत्कारणाद् ग्लानत्वमुपजायते । तत्र ◁ “शुष्यंतश्रीणि शुष्यन्ति, चक्षूरोगो ज्वरो व्रणः ।” इति वचनाद् ▷ यदि ज्वरादिको विशोषणसाध्यो रोगः ततो जघन्येनाप्यष्टमं कारयितव्यः । यस्य यस्य रोगस्य पथ्यं तत् तस्य कार्यम्, यथा—वातरोगिणो घृतादिपानं पित्तरोगिणः शर्करादुपयोजनं श्लेष्मरोगिणो नागरादिग्रहणमिति । “उण्होदगाइया वुड्ढि” त्ति उपवासं कर्तुमसहिष्णुर्यदि रोगेणाभुक्तः पारयति तत एष क्रमः—उष्णोदके प्रक्षिप्य कूरसिक्थानि अमलितानि ईषन्मलितानि वा सप्त दिनानि एकं वा दिनं दीयन्ते । ततः “किंचि” त्ति उष्णोदके मधुरोल्लणं स्तोकं प्रक्षिप्य तेन सह ओदनं द्वितीये सप्तके दिने वा दीयते । एवं तृतीये “बहु” त्ति बहुतरं मधुरोल्लणं उष्णोदके प्रक्षिप्य दीयते । “भागि” त्ति चतुर्थे सप्तके दिने वा त्रिभागो मधुरोल्लणस्य द्वौ भागावुष्णोदकस्य, “अद्ध” त्ति पञ्चमे सप्तके दिने वा अर्द्धं मधुरोल्लणस्यार्द्धमुष्णोदकस्य, षष्ठे “ओमि” त्ति त्रिभाग उष्णोदकस्य द्वौ भागौ मधुरोल्लणस्य, सप्तमे सप्तके दिने वा “थुक्कं” त्ति ‘थुक्कं’ किञ्चिन्मात्रमुष्णोदकं शेषं तु सर्वमपि मधुरोल्लणमित्येवं दीयते । तदनन्तरं द्वितीयादिनैरपि सहापथ्यान्यवगाहिमादीनि परिहरन् समुद्दिशति यावत् पुरातनमाहारं परिणमयितुं समर्थः सम्पन्न इति । ◁ एषा उष्णोदकादिका वृद्धिर्द्रष्टव्या । इह च सर्वत्राप्येकं दिनं [ विशेष-चूर्णि-]बृहद्भाष्याभिप्रायेण दिनसप्तकं तु चूर्ण्यभिप्रायेणेति मन्तव्यम् ▷ ॥ १९०८ ॥

अथ “अट्ठम” त्ति पदं व्याख्यानयन्नाह—

जाव न मुक्को ता अणसणं तु मुक्के वि ऊ अभत्तट्ठो ।
असहुस्स अट्ठ छट्ठं, नाऊण रुयं व जं जोगं ॥ १९०९ ॥

यावदसौ ज्वर-चक्षूरोगादिना रोगेण न मुक्तस्तावद् ‘अनशनम्’ अभक्तार्थलक्षणं कर्तव्यम् । मुक्तेनापि चैकं दिवसमभक्तार्थो विधेयः । अथासावसहिष्णुस्ततोऽष्टमं वा षष्ठं वा करोति । ज्ञात्वा वा ‘रुजं’ रोगविशेषं यद् यत्र योग्यं शोषणमशोषणं वा तत् तत्र कार्यम् ॥ १९०९ ॥

यद्येवंकुर्वाणानामसौ रोग उपशाम्याति ततः सुन्दरम्, अथ नोपशाम्यति ततः को विधिः ? इत्याह—

एवं पि कीरमाणे, विज्जं पुच्छे अठायमाणम्मि ।
विज्जाण अट्ठगं दो, अणिड्ढि इड्ढी अणिड्ढियरे ॥ १९१० ॥

एवमपि क्रियमाणे यदि रोगो न तिष्ठति—नोपशाम्यति ततस्तस्मिन्नतिष्ठति वैद्यं पृच्छति । अथ कियन्तो वैद्या भवन्ति ? इत्याह—वैद्यानां खल्वष्टकं मन्तव्यम् । तत्र द्वौ वैद्यौ नियमाद् ‘अनृद्धिकौ’ ऋद्धिरहितौ, ‘इतरे’ षड् वैद्या ऋद्धिमन्तो अनृद्धिमन्तो वा ॥ १९१० ॥

तदेव वैद्याष्टकं दर्शयति—

संविग्गमसंविग्गे, दिट्ठत्थे लिंगि सावए सण्णी । अष्टौ वैद्याः
अस्सण्णि इड्ढि गइरागई य कुसलेण तेगिच्छं ॥ १९११ ॥

‘संविग्नः’ उद्यतविहारी १ ‘असंविग्नः’ तद्विपरीतः २ ‘लिङ्गी’ लिङ्गावशेषमात्रः ३ ‘श्रावकः’

---

१ ◁ ▷ एतदन्तर्गतः पाठः भा० नास्ति ॥ २ ◁ ▷ एतदन्तर्गतः पाठः भा० कां० नास्ति ॥

**दुक्खं विसुयावेउं, पणगस्स य संभवो अलित्तम्मि ।**
**संदंते तसपाणा, आवज्जण तक्कणादीया ॥ २०७४ ॥**

वारकोऽलिप्तः सन् "विसुयावेउं" विशोषयितुं "दुक्खं" दुष्करो भवति । अलिप्ते च तत्र पानकभावितत्वात् पनकस्य 'सम्भवः' सम्मूर्च्छनं भवति । अलिप्तश्च वारकः पानके प्रक्षिप्ते सति स्यन्दते—परिगलति । स्यन्दमाने च 'त्रसप्राणिनः' कीटिका-मक्षिकादयः समागच्छेयुः । ◁ ततः किम् ? इत्यत आह—▷ "आवज्जण" त्ति यदनन्तकायिक-विकलेन्द्रियेषु सङ्घट्टनादिकमापद्यते तन्निष्पन्नं प्रायश्चित्तम् । "तक्कणाईय" त्ति ततो वारकात् पानके परिगलति मक्षिकाः पतन्ति, तासां ग्रसनार्थं गृहकोकिला धावति, तस्या अपि भक्षणार्थं मार्जारीत्येवं तर्कणम्—अन्योन्यं प्रार्थनं तदादयो दोषा भवेयुः ॥ २०७४ ॥ यत्र पुनः कायिकीभूमौ सागारिकं भवति तत्रेयं यतना—

**सागारिए परम्मुह, दगसद्दसंफुसंतिओ निंत्तं ।**
**पुलएज्ज मा य तरुणी, ता अच्छ दवं तु जा दिवसो ॥ २०७५ ॥**

सागारिके सति पराङ्मुखीभूय कायिकीं कृत्वा 'नेत्रं' भगमसंस्पृशन्त्यः 'दकशब्दं' पानकप्रक्षालनानुमापकं कुर्वन्ति । तथा 'तरुण्यः' स्त्रियः 'किमत्रास्ति पानकं न वा ?' इति जिज्ञासया मा प्रलोकन्तामिति हेतोस्तस्मिन् वारके तावद् 'अच्छम्' अकलुषं 'द्रवं' पानकं प्रक्षिप्तं तिष्ठति यावद् दिवसः, ततः सन्ध्यासमये तत् पानकं परिष्ठापयन्ति ॥ २०७५ ॥

गतं वारकद्वारम् । अथ भक्तार्थनाविधिद्वारमाह—

**मंडलिठाणस्सऽसती, बला व तरुणीसु अहिवडंतीसु ।**
**पत्तेय कमढभुंजण, मंडलिथेरी उ परिवेसे ॥ २०७६ ॥**

यद्यसागारिकं ततो मण्डल्यां समुद्दिशन्ति । अथ मण्डलीभूमिः सागारिकबहुला ततो मण्डलिस्थानस्यासति बलाद् वा प्रणयेन तरुणीष्वभिपतन्तीषु तत्रौर्णिकं कल्पमधः प्रस्तीर्य तस्योपरि सौत्रिकं तत्राप्यलाबुपात्रकाणि स्थापयित्वा प्रत्येकं कमढकेषु भुञ्जते । प्रवर्त्तिनी च पूर्वाभिमुखा धुरि निविशते । तत एका मण्डलिस्थविरा यमलजननीसहोदरा सर्वासामपि परिवेषयेत्, आत्मनोऽपि योग्यमात्मीये कमढके प्रक्षिपेत् ॥ २०७६ ॥

**ओगाहिमाइविगई, समभाग करेइ जत्तिया समणी ।**
**तासिं पच्चयहेउं, अणहिक्खद्धा अकलहो अ ॥ २०७७ ॥**

अवगाहिमं—पक्वान्नम् आदिशब्दाद् घृतादिकाश्च विकृतीः यावत्यः श्रमण्यस्तावतः समभागान् मण्डलिस्थविरा करोति । किमर्थम् ? इत्याह—'तासां' श्रमणीनां प्रत्ययार्थम्, तथा "अणहिक्खद्ध' त्ति 'अनधिकखादनार्थं' सर्वासामप्यविषमसमुद्देशनार्थम्, अकलहश्चैवं भवति, असङ्खडं न भवतीत्यर्थः ॥ २०७७ ॥ ताश्च समुद्देष्टुमुपविशन्त्य इत्थं भुञ्जते—

**निव्वीइय एवइया, व विगइओ लंबणा व एवइया ।**

---

१ ◁ ▷ एतदन्तर्गतः पाठः मो० ले० पुस्तकयोरेव ॥ २ °षयति, आ° भा० ॥ ३ °क्षिपति भा० ॥ ४ °षमं समुद्देशनं यथा भवतीति भावः, एवं च विधीयमाने 'अकलहः' परस्परमसङ्खडं न भवति ॥ २०७७ ॥ ताश्च समुद्दिशन्त्य इत्थं भा० ॥

अण्णगिलायंबिलिया, अज्ज अहं देह अम्मासि ॥ २०७८ ॥

एका ब्रूते—अथाहं निर्विकृतिका। द्वितीया प्राह—अथ मम 'एतावत्यः' एक-द्व्यादिसङ्ख्याका विकृतयो मुत्कलाः शेषाणां प्रत्याख्यानम्। अपरा भणति—अथ ममैतावन्तः 'लम्बनाः' कवलाः तत ऊर्द्ध्वं नियमः। अन्याऽभिधत्ते—अथाहम् 'अन्नग्लाना' ग्लानं—पर्युषितमन्नं मया भोक्तव्यमित्येवं प्रतिपन्नाभिग्रहा। तदपरा ब्रूते—अथाहम् 'आचाम्लिका' कृताचाम्लप्रत्याख्याना अत इदं विकृत्यादिकमन्यासां प्रयच्छत। एवं समुद्दिश्य स्वच्छपानकेनाचमनं कुर्वन्ति। प्रवर्त्तिन्याः कमढकं क्षुल्लिका निर्लेपयति, ◁ शेषास्तु स्वं स्वं कमढकम्। ▷ ततः सर्वास्वपि समुद्दिष्टासु मण्डलीस्थविरा समुद्दिशति ॥ २०७८ ॥ एवंविधं विधिं दृष्ट्वा किं भवति? इत्याह—

दट्ठूण निहुयवासं, सोयपयत्तं अलुद्धयत्तं च।
इंदियदमं च तासिं, विणयं च जणो इमं भणइ ॥ २०७९ ॥

'तासां' संयतीनां 'निभृतवासं' विकथादिविरहेण निर्व्यापारतयैवावस्थानम्, 'शौचप्रयत्नं' वारकग्रहणादिरूपम्, अलुब्धत्वं च विकृत्यादिप्रत्याख्यानाभिग्रहश्रवणेन, 'इन्द्रियदमं च' श्रोत्रादीन्द्रियनिग्रहम्, 'विनयं च' प्रवर्तिन्यादिष्वभ्युत्थानादिरूपं दृष्ट्वा 'जनः' लोक इदं ब्रवीति ॥२०७९॥

सच्चं तवो य सीलं, अणहिक्खाओ अ एगमेगस्स।
जइ बंभं जइ सोयं, एयासु परं न अन्नासु ॥ २०८० ॥
बाहिरमलपरिछुद्धा, सीलसुगंधा तवोगुणविसुद्धा।
धन्नाण कुलुप्पन्ना, एआ अवि होज्ज अम्हं पि ॥ २०८१ ॥

'सत्यं' वाक्कर्मणोरविसंवादिता, 'तपः' अनशनादि, 'शीलं' सुस्वभावता, 'अनधिकखादश्च' विषमभोजनम् 'एकैकस्याः' परस्परममूषाम्, तथा यदि 'ब्रह्म' ब्रह्मचर्यं यदि 'शौचं' शुचिसमाचारता, एतानि सत्यादीनि यदि परम् 'एतासु' संयतीषु दृश्यन्ते 'नान्यासु' शाक्यादिपाषण्डिनीषु। ततो यद्यप्येता बाह्यमलेन परिक्षिप्तास्तथापि शीलेन सुगन्धाः तपोगुणैः—अनशनादिभिः यद्वा तपसा—प्रतीतेन गुणैश्च—उपशमादिभिर्विशुद्धाः 'धन्यानां कुलोत्पन्नाः' एता येषां कुले उत्पन्नास्तेऽपि धन्या इति भावः। 'अपिः' सम्भावनायाम्, सम्भाव्यते किमयमर्थः यदस्माकमपि भगिनी-दुहित्रादय एतादृश्यः—स्वकुलोज्ज्वालनकारिण्यो भवेयुः? ॥२०८०॥२०८१॥

एवं तत्थ वसंतीणुवसंतो सो य सिं अगारिजणो।
गिण्हेति य सम्मत्तं, मिच्छत्तपरम्मुहो जाओ ॥ २०८२ ॥

एवं तत्र वसन्तीनां तासां स अगारीजनः 'उपशान्तः' प्रतिबुद्धस्ततो मिथ्यात्वपराङ्मुखो जातः सन् सम्यक्त्वं गृह्णाति, चशब्दाद् देशविरतिं गृहवासभग्नो वा कश्चित् तद्गुणग्रामरञ्जितमनाः सर्वविरतिमपि प्रतिपद्यते ॥ २०८२ ॥ गतं भिक्षार्थनाविधिद्वारम्। अथ प्रत्यनीकद्वारमाह—

तरुणीण अभिद्दवणे, संवरितो संजतो निवारेइ।
तह वि य अठायमाणे, सागारिओ तत्थुवालभइ ॥ २०८३ ॥

तरुणीनां संयतीनामभिद्रवणे प्रत्यनीकेन विधीयमाने सति 'संवृतः' संयतीवेषाच्छादितः

१ "ग्लानमन्नं अन्नगिलातं" इति चूर्णौ ॥ २ ◁ ▷ एतदन्तर्गतः पाठः त० डे० कां० नास्ति ॥

संयतो निवारयति । तथापि चातिष्ठति तस्मिन् 'सागारिकः' शय्यातरः 'तत्र' उपसर्गे तमुपालभते ॥ २०८३ ॥ [1]एनामेव निर्युक्तिगाथां भावयति—

**गणिणिअकहणे गुरुगा, सा वि य न कहेइ जइ गुरूणं पि ।**
**सिट्ठम्मि य ते गंतुं, अणुसट्ठी मित्तमाईहिं ॥ २०८४ ॥**

कश्चित् तरुणो विषयलोलुपतया संयतीनामुपद्रवं कुर्यात् ततस्तत्क्षणादेव ताभिः प्रवर्त्तिन्याः कथनीयम् । यदि न कथयन्ति ततश्चत्वारो गुरवः । साऽपि च प्रवर्त्तिनी यदि गुरूणां न कथयति तदापि चतुर्गुरवः आज्ञादयश्च दोषाः, तस्मात् कथयितव्यम् । ततः 'शिष्टे' कथिते 'ते' आचार्यास्तस्याविरतकस्य पार्श्वे गत्वा साध्वीशीलभङ्गस्य दारुणविपाकतासूचिकामनुशिष्टिं ददति । यद्युपरमते ततः सुन्दरम्, अथ नोपरमते ततो यानि तस्य मित्राणि आदिशब्दाद् ये वा भ्रात्रादयः स्वजनास्तेषां निवेद्य तैः प्रज्ञाप्यते । यदि स्थितस्ततो लष्टम् ॥ २०८४ ॥

**तह वि य अठायमाणे, वसभा भेसिंति तहवि य अठंते ।**
**अमुगत्थ[2] घरे एज्जह, तत्थ य वसभा वतिणिवेसा ॥ २०८५ ॥**

तथाप्यतिष्ठति तस्मिन् प्रत्यनीके 'वृषभाः' गच्छस्य शुभा-ऽशुभकार्यचिन्तानियुक्तास्तं प्रत्यनीकं भापयन्ति । तथाप्यतिष्ठति यस्तरुणः कृतकरणः साधुः स संयतीनेपथ्यं कृत्वा तस्य सङ्केतं प्रयच्छति, यथा—अमुकत्र गृहे यूयमागच्छत । ततो वृषभा व्रतिनीनां वेषं परिधाय तेन साधुना सह तत्र गत्वा प्रत्यनीकस्य शिक्षां कुर्वन्ति । तथाप्यनुपशान्ते तस्मिन् सागारिकस्य निवेद्यते । तेनोपलब्धो यदि स्थितस्ततः सुन्दरम् ॥ २०८५ ॥

अथ नास्ति तदानीं सन्निहितः सागारिकस्ततः किं कर्त्तव्यम् ? इत्याह—

**सागारिए असंते, किच्चकरे भोइयस्स व कहिंति ।**
**अण्णत्थ ठाण णिंती, खेत्तस्सऽसती णिवे चेव ॥ २०८६ ॥**

सागारिके 'असति' असन्निहिते 'कृत्यकरस्य' ग्रामचिन्तानियुक्तस्य 'भोगिकस्य वा' ग्रामस्वामिनः कथयन्ति । तेन शासितोऽपि यदि नोपरमते ततः संयतीरन्यत्र 'स्थाने' क्षेत्रे नयन्ति । अथ नास्ति संयतीप्रायोग्यमपरं क्षेत्रं स्वयं वा संयत्यो ग्लानादिकार्यव्यापृता न शक्नुवन्ति क्षेत्रान्तरं गन्तुं ततः 'नृपस्य' दण्डिकस्य निवेद्यते, स प्रत्यनीकमुपद्रवन्तं निवारयति ॥ २०८६ ॥

गतं प्रत्यनीकद्वारम् । अथ भिक्षानिर्गमद्वारमभिधित्सुराह—

**दो थेरि तरुणि थेरी, दोन्नि य तरुणीउ एक्किया तरुणी ।**
**चउरो अ अणुग्घाया, तत्थ वि आणाइणो दोसा ॥ २०८७ ॥**

[3]अत्र गुरुनियोगतश्चूर्णिरेव लिख्यते—जति दोन्नि थेरीओ निग्गच्छंति भिक्खस्स ण्का, तरुणी थेरी य जति ण्का, दो तरुणीओ जति निग्गच्छंति ण्का, एगा थेरी जति निग्गच्छइ ण्का, एक्किया तरुणी जति निग्गच्छइ ण्का, तत्राप्याज्ञादयो दोषाः ॥२०८७॥ कुतः ? इत्याह—

**चउकण्णं होज रहं, संका दोसा य थेरियाणं पि ।**
**कुट्टिणिसहिता बितिए, तइय-चउत्थीसु धुत्ति त्ति ॥ २०८८ ॥**

---

१ इदमेव भाव° भा० कां० ॥ २ °त्थ चेव ए° ता० ॥ ३ अत्र चूर्णिः—जति कां० ॥

दोण्हं थेरीणं दोसे—दुवे अभिलसहसीओ होज्जा, संका य—किं मन्ने केणइ दूतिकिच्चेण निउत्तियाओ ? असंकणिज्जाओ त्ति काउं । तरुणी थेरी य लोगो भणेज्जा—कुट्टिणिसहिया हिंडइ, "बितिए" त्ति पगारे निग्गमस्स । दो तरुणीओ धुत्तीओ संभाविज्जंति । एगा वि थेरी धुत्ती संभाविज्जइ । एगा तरुणी तक्कणिज्जा ॥ २०८८ ॥ यस्मादेते दोषाः तस्मादयं विधिः—

**पुरतो य मग्गतो या, थेरीओ मज्झ होंति तरुणीओ ।**
**अइगमणे निग्गमणे, एस विही होइ कायव्वो ॥ २०८९ ॥**

'पुरतः' अग्रतः 'मार्गतश्च' पृष्ठतः स्थविरा भवन्ति, मध्यभागे पुनस्तरुण्यः, एवं बह्वीनां सम्भूय पर्यटन्तीनामुक्तम् । जघन्येन तु तिस्रः सहैव पर्यटन्ति, तत्रैका स्थविरा पुरतः द्वितीया स्थविरैव पृष्ठतः तृतीया तरुणी तयोर्द्वयोरपि मध्यभागे स्थिता सती पर्यटन्ति । एवम् 'अतिगमने' गृहपतिगृहप्रवेशे 'निर्गमने च' तत एव निर्गमे एष विधिः कर्त्तव्यो भवति ॥ २०८९ ॥

कुतः ? इति चेद् उच्यते—

**तिगमादसंकणिज्जा, अतकणिज्जा य साण-तरुणाणं ।**
**अन्नोन्नरक्खणेसण, वीसत्थपवेसकिरिया य ॥ २०९० ॥**

त्रिकादयः पर्यटन्त्योऽशङ्कनीया भवेयुः, श्वान-तरुणानां च 'अतर्कणीयाः' अनभिलषणीया भवन्ति, उवद्रवत्स्वपि च श्वान-गवादिषु त्रिप्रभृतयोऽन्योन्यं परस्परं सुखेनैव रक्षणं कुर्वन्ति, एषणां च सम्यक् शोधयन्ति, विश्वस्ताश्च सत्यो गृहस्थकुलेषु प्रवेश-निर्गमादिकाः क्रियाः कुर्वन्ति ॥ २०९० ॥ यत्र कोष्ठको भवेत् तत्रायं विधिः—

**थेरी कोट्ठगदारे, तरुणी पुण होइ तीएँ णादूरे ।**
**बिइय किढी ठाइ बहिं, पच्चत्थियरक्खणट्ठाए ॥ २०९१ ॥**

एका स्थविरा 'कोष्ठकस्य' अपवरकस्य द्वारे, तरुणी पुनः 'तस्याः' स्थविराया नातिदूरे प्रदेशे, या तु द्वितीया 'किढी' स्थविरा सा द्वारस्य बहिस्तिष्ठति । किमर्थम् ? इत्याह—प्रत्यर्थी—प्रत्यनीकस्तस्य रक्षणार्थम्, यदि कोऽप्युपसर्गं कुर्यात् तदा सुखेनैव बोलं कृत्वा स निवार्यते ॥ २०९१ ॥

**जाणंति तव्विह कुले, संबुद्धीए चरिज्ज अन्नोन्नं ।**
**ओराल निच्च लोयं, खुज्ज तवो आउल सहाया ॥ २०९२ ॥**

तद्विधानि—तादृशानि सम्भावनीयोपद्रवाणि कुलानि सम्यग् जानन्ति, ज्ञात्वा च प्रथमत एव परिहरन्ति । 'अन्योऽन्यं' परस्परं 'सम्बुद्ध्या' सम्मत्या 'चेरयुः' भिक्षाचर्यां पर्यटेयुः, मा भूवन्नसम्मत्या पर्यटने परस्परमसङ्खडादयो दोषाः । या च 'उदारा' रूपातिशयसंयुक्ता संयती सा नित्यमेव लोचमात्मनः करोति, "खुज्ज" त्ति तस्याः पृष्ठदेशे कुब्जकरणी स्थापयितव्या, 'तपः' चतुर्थादिकं सा कारापणीया, 'आकुले' जनाकीर्णे बह्वीभिश्च सहायाभिः सहिता सा भिक्षादौ

१ मध्ये । एवम् मो० ले० विना ॥

२ जनाकीर्णे सा भिक्षां हिण्डापयितव्या, 'सहाया' द्वितीया तस्या दातव्या, न सहायविरहितायाः प्रतिश्रयान्निर्गन्तुं कदाचिदप्यनुज्ञातव्यमिति भावः ॥ २०९२ ॥ आह किं पुनः कारणं येन त्रिप्रभृतिवृन्देन ता भिक्षामटन्ति ? इति उच्यते—तिप्पभिइ मो० ॥

हिण्डापनीया ॥ २०९२ ॥ अथ तासां वृन्देन भिक्षाटने कारणान्तरमाह—

**तिप्पभिइ अडंतीओ, गिण्हंतऽन्नन्नहिं चिमे तिन्नि ।**
**संजम-दव्वविरुद्धं, देहविरुद्धं च जं दव्वं ॥ २०९३ ॥**

त्रि¹प्रभृतिवृन्देन भिक्षामटन्त्यः 'अन्योऽन्यस्मिन्' पृथक्पृथग्भाजने चे²शब्दः प्रागुक्तकारणापेक्षया कारणान्तरद्योतनार्थः, अमूनि त्रीणि द्रव्याणि सुखेनैव गृह्णन्ति, तद्यथा—संयमविरुद्धं द्रव्यविरुद्धं देहविरुद्धं च यद् द्रव्यम् ॥ २०९३ ॥ एतान्येव यथाक्रमं प्रतिपादयति—

**पाँ³लंक-लट्टसागा, मुग्गकयं चाऽऽमगोरसुम्मीसं ।**
**संसज्जती उ अचिरा, तं पि य नियमा दुदोसाय ॥ २०९४ ॥**

पाँ⁴लङ्कशाकं—महाराष्ट्रादौ प्रसिद्धम्, लट्टाशाकं—कौसुम्भशालनकम्, एते अन्योऽन्यं मिलिते सूक्ष्मजन्तुभिः संसज्येते । यच्च मुद्गकृतम्, उपलक्षणत्वादन्यदपि द्विदलं तदप्यामगोरसोन्मिश्रं⁵ सद् अचिरादेव सूक्ष्मजन्तुभिः संसज्यते, संसक्तं च नियमाद् द्वौ दोषौ समाहृतौ द्विदोषं तस्मै द्विदोषाय भवति, संयमोपघाता-ऽऽत्मोपघातरूपं दोषद्वयं करोतीत्यर्थः ॥ २०९४ ॥

**दहि-तेल्ला⁶ई उभयं, पय-सोवीराउ होंति उ विरुद्धा ।**
**देहस्स विरुद्धं पुण, सी-उण्हाणं समाओगो ॥ २०९५ ॥**

दँ⁷धि-तैले आदिशब्दादन्यदपि 'उभयं' मिलितं सद् यत् परस्परविरुद्धम्, ये च 'पयः-सौवीरे' दुग्ध-काञ्जिके परस्परं विरुद्धे एतद् द्रव्यविरुद्धं मन्तव्यम् । देहस्य पुनर्विरुद्धं यः शीतोष्णयोर्द्रव्ययोः परस्परं समायोगः । एतानि पृथक्पृथग्भाजनेषु गृह्यमाणानि न संयमाद्युपघाता⁸य जायन्ते ॥ २०९५ ॥ अपि च—

**नत्थि य मामागाइं⁹, माउग्गामो य तासिमब्भासे ।**
**सी-उण्हगिण्हणाए, सारक्खण एक्कमेक्कस्स ॥ २०९६ ॥**

नँ¹⁰ च सन्ति तासां मामाकानि कुलानि, नहि कोऽपि स्त्रीजनं गृहे प्रविशन्तमीर्ष्यया निषे-

१ त्रिप्रभृतयस्ता भिक्षा° भा० ॥ २ चशब्दः कारणान्तरद्यो° भा० ॥ ३ पालक्क-° ता० ॥

४ पालङ्कशाकं महाराष्ट्रे गोल्लविषये च प्रसि° भा० । "पालक्कं महरट्ठविसए गोल्लविसए य सागो जायइ" इति विशेषचूर्णौ ॥

५ °दलमामगोरसोन्मिश्रं सदचिरादेव सूक्ष्मजन्तुभिः संसज्यते, अतस्तदपि च नियमाद् द्विदोषाय भवति, संयमा-ऽऽत्मोप° भा० ॥    ६ °ल्लाई दव्वे, पय° ता० ॥

७ दधि तैलं च प्रतीतम् एतदुभयम् आदिशब्दादपरमपि संयुक्तं सद् यत् परस्परविरुद्धम्, तथा पयः—दुग्धं सौवीरं—काञ्जिकम् एते अपि परस्परं विरुद्धे भा० ॥

८ °तायोपकल्प्यन्ते भा० ॥    ९ °गाईं भा० ॥

१० न सन्ति 'तासां' संयतीनां मामाकाः—'मा मदीयं गृहं प्रविशत' इत्येवमीर्ष्यालुतया प्रतिषेधकाः पुरुषाः, आदिशब्दाद् अप्रीतिकृतोऽपि न सन्ति, 'मातृग्रामश्च' स्त्रीवर्गः तासाम् 'अभ्यासे' प्रत्यासत्तौ वर्तते स्त्रियः स्त्रीणां विश्वसन्तीति भावः, ततः कोऽपि प्रतिसेवनार्थी कयाचिदगार्या तरुणसंयतीं प्रज्ञापयेत्, एतैः कारणैः त्रिप्रभृतयः पर्यटन्ति, 'मा चिरं पर्यटितव्यं भविष्यति' अतो दोषाक्षमपि गृह्णन्ति, एवं शीतोष्णग्रहणेन संरक्षणमेकैकस्याः परस्परं कृतं भवति ॥ २०९६ ॥ कथं पुनः शीतमुष्णं च गृह्णन्ति ? इति चेद् उच्यते—एगत्थ भा० ॥

घयतीति भावः । मातृग्रामो नाम समयपरिभाषया स्त्रीवर्गः, चशब्द एवकारार्थः, ततं इदमुक्तं भवति—स्त्रीवर्ग एव प्रायेण भिक्षादायकः, स च तासां संयतीनामभ्यासे स्त्रीत्वसम्बन्धमधिकृत्य प्रत्यासत्तौ वर्त्तते, अतस्त्रिप्रभृतीनामपि पर्यटन्तीनां सुखेनैव भक्त-पानं पर्याप्तं भवति । शीतोष्णग्रहणेन च संरक्षणमेकैकस्याः परस्परं कृतं भवति ॥ २०९६ ॥ कथं पुनः ? इत्यत आह—

एगत्थ सीयमुसिणं, च एगहिं पाणगं च एगत्था ।
दोसीणस्स अगहणे, चिराडणे होज्जिमे दोसा ॥ २०९७ ॥

'एकत्र' प्रतिग्रहे 'शीतं' पर्युषितं भक्तं गृह्णन्ति, एकस्मिन्नुष्णम्, एकत्र च पानकम्, एतच्च तिसृणामटन्तीनां घटामाटीकते । अथ द्वे पर्यटतस्तत एकत्र प्रतिग्रहे उष्णं द्वितीयत्र तु पानकं परं दोषान्नं कुत्र गृह्णन्तु ? मात्रकं तु स्वार्थं परिभोक्तुं न कल्पते, अथोष्णमध्ये दोषान्नं गृह्णन्ति तदा देहविरुद्धं भवति, अथ दोषान्नं न गृह्णन्ति ततो दोषान्नस्याग्रहणे 'चिराटने' चिरं पर्यटन्तीनां तरुणादिकृतोपसर्गैः स्त्रीवेद उद्दीप्येत ॥ २०९७ ॥ तथा चामुमेवार्थं दर्शयितुं वेदत्रयस्वरूपमाह—

थी पुरिसो अ नपुंसो, वेदो तस्स उ इमे पगारा उ ।
फुंफुम-दवग्गिसरिसो, पुरदाहसमो, भवे तइओ ॥ २०९८ ॥

वेदस्त्रिधा—स्त्रीवेदः पुरुषवेदो नपुंसकवेदश्च । तस्य तु त्रिविधस्यापि यथाक्रममभी प्रकाराः—स्त्रीवेदः फुम्फुकाग्निसदृशः—करीषाग्नितुल्यः, यथा करीषाग्निरन्तर्धगधगन्नास्ते न परिस्फुटं प्रज्वलति न वा विध्यायति चालितस्तु तत्क्षणादेवोद्दीप्यते एवं स्त्रीवेदोऽपि । पुरुषवेदस्तु दवाग्निसदृशः, यथा दवाग्निरिन्धनयोगतः सहसैव प्रज्वल्य विध्यायति एवं पुरुषवेदोऽपि । तृतीयो नपुंसकवेदः स पुरदाहसमः, यथा हि महानगरदाहे वह्निः प्रज्वलितः सत्स्वार्द्रे वा शुष्के वा सर्वत्र दीप्यते एवं नपुंसकवेदोऽपि स्त्रियां पुरुषे वा सर्वत्र दीप्यते न चोपशाम्यति ॥ २०९८ ॥

इत्थं वेदत्रयस्वरूपमुपदर्श्य प्रस्तुतयोजनामाह—

जह फुंफुमा हसहसेइ घट्टिया एवमेव थीवेदो ।
दिप्पइ अवि किढियाण वि, आलिंगण-छे(छं)दणाईहिं ॥ २०९९ ॥

यथा फुम्फुकाग्निर्घट्टितः सन् "हसहसेइ" त्ति देदीप्यते एवमेव स्त्रीवेदोऽप्यालिङ्गन-च्छेद-(च्छन्द) नादिभिरुदीरितः ◁ सन् "किढियाण वि" त्ति ▷ स्थविराणामपि दीप्यते, किं पुनस्तरुणीनाम् ? इत्यपिशब्दार्थः ॥२०९९॥ आह स्थविराणां कथं वेदोद्दीपनं भवति ? इति उच्यते—

न वओ इत्थ पमाणं, न तवस्सित्तं सुयं न परियाओ ।
अवि खीणम्मि वि वेदे, थीलिंगं सव्वहा रक्खं ॥ २१०० ॥

---

१ ततः किमुक्तं ॥

२ एतच्च त्रिप्रभृतीनामेव पर्यटन्तीनां भवति । अथ द्वे पर्यटतस्तत एकत्रोष्णं द्वितीये च प्रतिग्रहे पानकं गृहीतं ततो दोषान्नमुत्पादितं तत् कुत्र गृह्णातु ? । अथ यस्मिन्नेव प्रतिग्रहे उष्णं गृहीतं तत्रैव शीतमपि गृह्णाति तदा देहविरुद्धं भवति । अथ दोषान्नं न गृह्णन्ति ततो दोषान्नस्याग्रहणे चिराटनं-प्रभूतां वेलां पर्यटनं भवति ॥ २०९७ ॥ तत्र चामी दोषा भवेयुः—थी पुरिसो भा० ॥

३ °नां भवति । अथ त० डे० कां० ॥ ४ ◁ ▷ एतदन्तर्गतः पाठः मो० डे० पुस्तकयोरेव ॥

न 'वयः' वार्द्धकादिकम् 'अत्र' विचारे प्रमाणम्, न वा 'तपस्वित्वम्' अनशनादितपःकर्मकारिता, न वा 'श्रुतम्' आचारादिकं सुबह्वप्यवगाहितम्, न वा 'पर्यायः' द्राघीयःप्रव्रज्याकाललक्षणः, एतेषु सत्स्वपि वेदोदयो भवेदित्यर्थः । अपि च 'क्षीणेऽपि' ◁ निर्दग्धेन्धनकल्पे कृतेऽपि ▷ वेदे स्त्रीलिङ्गं सर्वथा रक्ष्यम्, अत एव स्त्रीकेवली यथोक्तामार्यिकोपकरणप्रावरणादियतनां करोतीति भावः ॥ २१०० ॥ आह यदि ताः स्नानादिपरिकर्मरहिताः ततः किं कोऽपि तासु रागं व्रजति येनेत्थं यतना क्रियते ? उच्यते—

कामं तवस्सिणीओ, ण्हाणुव्वट्टणविकारविरयाओ ।
तह वि य सुपाउआणं, अपेसणाणं चिमं होइ ॥ २१०१ ॥

'कामम्' अनुमतं यथा तपस्विन्यः स्नानोद्वर्तनविकारविरतास्तथापि 'सुप्रावृतानां' नित्यमेव बहुभिरुपकरणैराच्छादितानाम् 'अप्रेषणानां च' अव्यापाराणाम् 'इदम्' अनन्तरमेव वक्ष्यमाणं शरीरसौन्दर्यं भवति ॥ २१०१ ॥ तदेवाह—

रूवं वन्नो सुकुमारया य निद्धच्छवी य अंगाणं ।
होंति किर सन्निरोहे, अज्जाण तवं चरंतीणं ॥ २१०२ ॥

'रूपम्' आकृतिः 'वर्णः' गौरत्वादिः 'सुकुमारता' कोमलस्पर्शता स्निग्धा च—कान्तिमती छविः—त्वग् 'अङ्गानां' शरीरावयवानाम् । एतानि रूपादीनि आर्यिकाणां 'सन्निरोधे' बहूपकरणप्रावरणादौ ध्रियमाणानां तपः चरन्तीनामपि भवन्ति, ततो युक्तियुक्ता पूर्वोक्ता तासां यतनेति ॥ २१०२ ॥ गतं भिक्षानिर्गमद्वारम् । अथ निर्ग्रन्थानां मासः कस्मात् तासां द्वौ मासाविति द्वारम् । शिष्यः पृच्छति—किं निर्ग्रन्थीनामभ्यधिकानि महाव्रतानि येन तासां द्वौ मासौ निर्ग्रन्थानामेकं मासमेकत्र वस्तुमनुज्ञायते ? सूरिराह—

जइ वि य महव्वयाइं, निग्गंथीणं न होंति अहियाइं ।
तह वि य निच्चविहारे, हवंति दोसा इमे तासिं ॥ २१०३ ॥

यद्यपि च निर्ग्रन्थीनां महाव्रतानि नाधिकानि भवन्ति तथापि 'नित्यविहारे' मासे मासे क्षेत्रान्तरसङ्क्रमणे इमे दोषास्तासां भवन्ति ॥ २१०३ ॥

मंसाइपेसिसरिसी, वसही खेत्तं च दुल्लभं जोग्गं ।
एएण कारणेणं, दो दो मासा अवरिसासु ॥ २१०४ ॥

मांसादिपेशीसदृशी संयती, सर्वस्याप्यभिलषणीयत्वात् । तथा तासां योग्या वसतिर्दुर्लभा, क्षेत्रं च तत्प्रायोग्यं दुर्लभम् । ततो यथोक्तगुणविकलायां वसतौ दोषदुष्टे वा क्षेत्रे स्थाप्यमानानां बहवः प्रवचनविराधनादयो दोषा उपढौकन्ते । एतेन कारणेन तासाम् 'अवर्षासु' वर्षावासं

---

१ ◁ ▷ एतदन्तर्गतः पाठः मो० ले० पुस्तकयोरेव ॥

२ आह नन्वेतदपि चिन्त्यमस्ति यत् छद्मस्थसंयत्योऽप्येवंविधां यतनां कुर्वन्ति, यावता यदि ताः स्नानादिविकाररहितास्ततः किमर्थमित्थं यतना क्रियते ? उच्यते भा० ॥

३ °नाम्' अन्तर्निवसन्यादिभिर्बहु° भा० ॥ ४ द्वारं व्याख्यायते । शिष्यः भा० त० डे० ॥

५ °षा भवन्ति । ए° भा० ॥

विमुच्य द्वौ द्वौ मासावेकत्र वस्तुमनुज्ञायते ॥ २१०४ ॥

अथ द्वयोरुपरि वसन्तीनां दोषान् द्वितीयपदं चोपदर्शयति—

**दोण्हं उवरि वसंती, पायच्छित्तं च होंति दोसा य ।**
**बिइयपयं च गिलाणे, वसही भिक्खं च जयणाए ॥ २१०५ ॥**

द्वयोर्मासयोरुपरि वसन्ति ततः प्रायश्चित्तं दोषाश्च भवन्ति । द्वितीयपदं च ग्लाने वसतिर्भैक्षं च यतनया ग्रहीतव्यम् । भावार्थो निर्ग्रन्थानामिव द्रष्टव्यः ॥ २१०५ ॥ सूत्रम्—

**से गामंसि वा जाव रायहाणिंसि वा सपरिक्खेवंसि सबाहिरियंसि कप्पइ निग्गंथीणं हेमंत-गिम्हासु चत्तारि मासा वत्थए—अंतो दो मासे, बाहिं दो मासे । अंतो वसमाणीणं अंतो भिक्खायरिया, बाहिं वसमाणीणं बाहिं भिक्खायरिया ४–९ ॥**

अस्य व्याख्या प्राग्वत् । नवरं सबाहिरिके क्षेत्रेऽन्तर्द्वौ मासौ बहिर्द्वौ मासावित्येवं चतुरो मासान् निर्ग्रन्थीनां वस्तुं कल्पत इति ॥ अथ भाष्यम्—

**एसेव कमो नियमा, सपरिक्खेवे सबाहिरीयम्मि ।**
**नवरं पुण नाणत्तं, अंतो बाहिं चउम्मासा ॥ २१०६ ॥**

'एष एव' पूर्वसूत्रोक्तः क्रमः सर्वोऽपि नियमात् सपरिक्षेपे सबाहिरिके क्षेत्रे वसन्तीनां संयतीनां द्रष्टव्यः । नवरं पुनः 'नानात्वं' विशेषोऽयम्—'अन्तः' अभ्यन्तरे 'बहिः' बाहिरिकायाम् एवमुभयोश्चत्वारो मासाः पूरणीयाः ॥ २१०६ ॥

**चउण्हं उवरि वसंती, पायच्छित्तं च होंति दोसा य ।**
**नाणत्तं असईएँ उ, अंतो वसही बहिं चरइ ॥ २१०७ ॥**

चतुर्णां मासानामुपरि यदि सबाहिरिके क्षेत्रे संयती वसति तदा तदेव प्रायश्चित्तं त एव च दोषाः द्वितीयपदमपि तदेव मन्तव्यम् । 'नानात्वं' विशेषः पुनरयम्—बाहिरिकायां वसतेः शय्यातरस्य वा यथोक्तगुणस्य 'असति' अभावे 'अन्तः' प्राकाराभ्यन्तरे "वसहि" त्ति वसतौ पूर्वस्यामेव स्थिता 'बहिः' बाहिरिकायां 'चरति' भिक्षाचर्यामटति ॥ २१०७ ॥

इदमेव स्पष्टयति—

**जोग्गवसहीइ असई, तत्थेव ठिया चरिंति बाहिं तु ।**
**पुव्वगहिए विगिंचिय, तत्तो च्चिय मत्तगादी वि ॥ २१०८ ॥**

बहिः संयतीयोग्याया वसतेरभावे 'तत्रैव' अभ्यन्तरोपाश्रये स्थिताः सन्त्यो बहिश्चरन्ति, पूर्वगृ[1]हीतानि मात्रक-तृण-डगलादीनि 'विविच्य' परित्यज्य अपराणि 'तत एव' बाहिरिकाया मात्रकादीन्यप्यानेतव्यानि, न केवलं भिक्षेत्यपिशब्दार्थः, श्रुत-संहननादिविषया सामाचारी

१ °हीतं मात्रकं-तृण-डगलादि 'वि°' मो० ले० विना ॥

क्षेत्र-कालादिविषया च स्थितिः स्थविरकल्पिकानामिव द्रष्टव्या ॥ २१०८ ॥

तदेवमुक्त आर्यिकाणामपि मासकल्पविधिः । अथ शिष्यः प्रश्नयति—

गच्छे जिणकप्पम्मि य, दोण्ह वि कयरो भवे महिड्ढीओ ।
निप्फायग-निप्फन्ना, दोन्नि वि होंती महिड्ढीया ॥ २१०९ ॥

गच्छ-जिनकल्पयोर्द्वयोर्मध्ये कतरः 'महर्द्धिकः' प्रधानतरो भवेत् ? । गुरुराह—निष्पादक-निष्पन्नाविति कृत्वा द्वावपि महर्द्धिकौ भवतः । तत्र गच्छः सूत्रार्थग्राहणादिना जिनकल्पिकस्य निष्पादकः अतोऽसौ महर्द्धिकः, जिनकल्पिकस्तु निष्पन्नः—ज्ञान-दर्शन-चारित्रेषु परिनिष्ठित इत्यसौ महर्द्धिकः ॥ २१०९ ॥ एनामेव निर्युक्तिगाथां भावयति—

दंसण-नाण-चरित्ते, जम्हा गच्छम्मि होइ परिवुड्ढी ।
एएण कारणेणं, गच्छो उ भवे महिड्ढीओ ॥ २११० ॥

दर्शन-ज्ञान-चारित्राणां यस्माद् गच्छे परिवृद्धिर्भवति एतेन कारणेन गच्छो महर्द्धिको भवति ॥ २११० ॥

पुरतो व मग्गतो वा, जम्हा कत्तो वि नत्थि पडिबंधो ।
एएण कारणेणं, जिणकप्पीओ महिड्ढीओ ॥ २१११ ॥

'पुरतो वा' विहरिष्यमाणक्षेत्रे 'मार्गतो वा' पृष्ठतः पूर्वविहृतक्षेत्रे यस्मात् 'कुतोऽपि' द्रव्यतः क्षेत्रतः कालतो भावतो वा प्रतिबन्धस्तस्य भगवतो न विद्यते एतेन कारणेन जिनकल्पिको महर्द्धिकः ॥ २१११ ॥ अथ द्वयोरपि महर्द्धिकत्वं दृष्टान्तेन दर्शयति—

दीवा अन्नो दीवो, पइप्पई सो य दिप्पइ तहेव ।
सीसो च्चिय सिक्खंतो, आयरिओ होइ नऽन्नत्तो ॥ २११२ ॥

दीपाद् 'अन्यः' द्वितीयो दीपः प्रदीप्यते, स च मौलो दीपस्तथैव दीप्यते, एवं जिनकल्पिकदीपोऽपि गच्छदीपादेव प्रादुर्भवति, स च गच्छदीपस्तथैव ज्ञान-दर्शन-चारित्रैः स्वयं प्रदीप्यते। यद्वा यथा शिष्य एव शिक्षमाणः सन् क्रमेणाचार्यो भवति 'नान्यतः' नान्येन प्रकारेण एवं स्थविरकल्पिक एव तपःप्रभृतिभिर्भावनाभिरात्मानं भावयन् क्रमेण जिनकल्पिको भवति नान्यथा । अतो द्वावपि महर्द्धिकौ ॥ २११२ ॥

अस्यैवार्थस्य समर्थनापरं दृष्टान्तत्रयं दर्शयितुं निर्युक्तिगाथामाह—

दिट्ठंतो गुहासीहे, दोन्नि य महिला पया य अपया य ।
गावीण दोन्नि वग्गा, सावेक्खो चेव निरवेक्खो ॥ २११३ ॥

दृष्टान्तोऽत्र गुहासिंहविषयः प्रथमः । द्वितीयो द्वे महिले—एका 'प्रजा' अपत्यवती द्वितीया 'अप्रजा' अपत्यविकला । तृतीयो गवां द्वौ वर्गौ—एकः सापेक्षः, अपरो निरपेक्ष इति ॥२११३॥

तत्र गुहासिंहदृष्टान्तं भावयति—

सीहं पालेइ गुहा, अविहाडं तेण सा महिड्ढीया ।
तस्स पुण जोव्वणम्मि, पओअणं किं गिरिगुहाए ॥ २११४ ॥

१ इत्यमेव भा° मो० ले० विना ॥ २ °थामाह भा० कां० ॥

"अविहाडं" ति देशीभाषया बालकं सिंहं गुहा 'पालयति' वनमहिष-व्याघ्रादिभ्यो रक्षति, तन्निर्गतस्य तस्य तेभ्यः प्रत्यपायसम्भवात्; तेन कारणेन गुहा महर्द्धिका । यदा तु सिंहो यौवनं प्राप्तो भवति तदा किं तस्य प्रयोजनं गिरिगुहया ? न किञ्चिदित्यर्थः, स्वयमेव वनमहिषाद्युपद्रवादात्मानं पालयितुं प्रत्यलीभूतत्वात्, इत्थं सिंहो महर्द्धिकः ॥ २११४ ॥

अथार्थोपनयमाह—

दव्वावइमाईसुं, कुसीलसंसग्गि-अन्नउत्थीहिं ।
रक्खइ गणीपुरोगो, गच्छो अविकोवियं धम्मे ॥ २११५ ॥

गणी—आचार्यः स पुरोगः—पुरस्सरो नायको यस्य स तथाविधो गच्छो गुहास्थानीयः सिंहशावकस्थानीयं साधुं 'धर्मे' श्रुत-चारित्रात्मके 'अविकोविदम्' अद्याप्यप्रबुद्धं द्रव्यापदि आदिशब्दात् क्षेत्र-काल-भावापत्सु तथा कुशीलाः—पार्श्वस्थादयस्तैरन्यतीर्थिकैर्वा सार्द्धं यः संसर्गस्तत्र च 'रक्षति' विश्रोतसिका-प्रमाद-मिथ्यात्वाद्युपद्रवात् पालयति अतो गच्छो महर्द्धिकः । यदा त्वसौ द्विविधेऽपि धर्मे व्युत्पन्नमतिः कृतपरिकर्मा जिनकल्पं प्रतिपन्नस्तदा स्वयमेवात्मानं द्रव्यापदादिष्वपि विश्रोतसिकादिविरहितः सम्यक् परिपालयति अतो जिनकल्पिको महर्द्धिकः ॥ २११५ ॥

अथ महेलाद्वयदृष्टान्तमाह—

आणा-इस्सरियसुहं, एगा अणुभवइ जइ वि बहुतत्ती ।
देहस्स य संठप्पं, भोगसुहं चेव कालम्मि ॥ २११६ ॥
परवावारविमुक्का, सरीरसकारतप्परा निच्चं ।
मंडणए वक्खित्ता, भत्तं पि न चेयई अपया ॥ २११७ ॥

द्वयोर्महेलयोर्मध्ये 'एका' सप्रसवा यद्यपि 'बहुतप्तिः' अपत्यस्नपनादिबहुव्यापारव्यापृता तथापि सा गृहस्वामिनीत्वादाज्ञैश्वर्यसुखमनुभवति, 'काले च' प्रस्तावे देहस्य 'संस्थाप्यं' संस्थापनां भोगसुखमपि च प्राप्नोति ॥ २११६ ॥

या तु 'अप्रजा' अप्रसवा सा 'परव्यापारविमुक्ता' अपत्यादिचिन्तावर्जिता 'नित्यं' सदा शरीरसंस्कारे—मुखधावनादौ तत्परा—परायणा 'मण्डनके' विलेपना-ऽऽभरणादौ व्याक्षिप्ता सती 'भक्तमपि' भोजनमपि 'न चेतयति' न संस्मरति ॥ २११७ ॥ अर्थोपनयमाह—

वेयावच्चे चोयण-वारण-वावारणासु य बहूसु ।
एमादीवक्खेवा, सययं झाणं न गच्छम्मि ॥ २११८ ॥

यथा सप्रसवायाः स्त्रियो बहुव्यापारव्यग्रता भवति तथा गच्छेऽपि यद् आचार्योपाध्यायादिवैयावृत्त्यम्, या च चक्रवालसामाचारीं हापयतो नोदना, या चाकृत्यप्रतिसेवनां कुर्वतो वारणा, याश्च बहवो वस्त्र-पात्राद्युत्पादनविषया व्यापारणाः तदेवमादिषु यो व्याक्षेपः—व्याकुलत्वं तस्माद्धेतोः 'गच्छे' गच्छवासिनां 'सततं' निरन्तरं 'ध्यानम्' एकाग्रशुभाध्यवसायात्मकमात्मनो मण्डनकल्पं न भवति । जिनकल्पिकस्य तु वैयावृत्त्यादिव्याक्षेपरहितस्य निरपत्यस्त्रिया आत्मनो मण्डनमिव निरन्तरमेव तथा तद् उपजायते यथा भोक्तुमपि स्पृहा न भवति ॥ २११८ ॥

अथ गोवर्गद्वयदृष्टान्तमाह—

सद्दूलपोइयाओ, नस्संतीओ वि णेव धेणूओ ।
मोत्तूण तण्णगाइं, दवंति सपरक्कमाओ वि ॥ २११९ ॥
न वि वच्छएसु सज्जंति वाहिओ नेव वच्छमाऊसु ।
सबलमगूहंतीओ, नस्संति भएण वग्घस्स ॥ २१२० ॥

'धेनवः' अभिनवप्रसूता गावस्ताः 'शार्दूलेन' व्याघ्रेण 'पोतिताः' त्रासिताः सत्यो नश्यन्त्योऽपि 'तर्णकानि' वत्सरूपाणि मुक्त्वा 'सपराक्रमा अपि' समर्था अपि 'नैव द्रवन्ति' न शीघ्रं पलायन्ते, अपत्यसापेक्षत्वात् ॥ २११९ ॥

यास्तु "वाहिओ" बष्कयिण्यस्ता नापि वत्सकेषु 'सजन्ति' ममत्वं कुर्वन्ति, नापि 'वत्समातृषु' धेनुषु, किन्तु स्वबलमगूहमाना व्याघ्रस्य भयेन नश्यन्ति, निरपेक्षत्वात् ॥ २१२० ॥

एष दृष्टान्तः । अथार्थोपनयमाह—

आयसरीरे आयरिय-बाल-वुड्ढेसु आवि सावेक्खा ।
कुल-गण-संघेसु तहा, चेइयकज्जाइएसुं च ॥ २१२१ ॥

यथा धेनवस्तथा गच्छवासिनोऽप्यात्मशरीरे आचार्य-बाल-वृद्धेषु अपि च कुल-गण-सङ्घकार्येषु चैत्यादिकार्येषु च सापेक्षाः, अतः संसारव्याघ्रभयेन नश्यन्तोऽपि संहननादिबलोपेता अपि न शीघ्रं पलायन्ते । जिनकल्पिकास्तु भगवन्त आत्मशरीरादिनिरपेक्षा अधेनुगाव इव स्ववीर्यमगूहमानाः संसारव्याघ्राद् निःप्रत्यूहं पलायन्ते । यद्येवं तर्हि जिनकल्पो महर्द्धिकतर इत्यापन्नम्, मैवं वादीः, ◁ निजनिजनिरुपमगुणैरुभयोरपि तुल्यकक्षत्वात् । तथाहि—अत्यन्ताप्रमादनिष्प्रतिकर्मतादिभिर्गुणैर्जिनकल्पो महर्द्धिकः, परोपकार-प्रवचनप्रभावनादिभिश्च गुणैः स्थविरकल्पिको महर्द्धिक इति ▷ ॥ २१२१ ॥ अपि च—

रयणायरो उ गच्छो, निप्फादओ नाण-दंसण-चरित्ते ।
एएण कारणेणं, गच्छो उ भवे महिड्ढीओ ॥ २१२२ ॥

रत्नाकर इव रत्नाकरः—जिनकल्पिकादिरत्नानामुत्पत्तिस्थानं यतो गच्छो वर्त्तते, निष्पादकश्च ज्ञान-दर्शन-चारित्रेषु एतेन कारणेन गच्छो महर्द्धिकः ॥ २१२२ ॥ इदमेव भावयति—

रयणेसु बहुविहेसुं, नीणिज्जंतेसु नेव नीरयणो ।
अतरो तीरइ काउं, उप्पत्ती सो य रयणाणं ॥ २१२३ ॥
इय रयणसरिच्छेसुं, विणिग्गएसुं पि नेव नीरयणो ।
जायइ गच्छो कुणइ य, रयणब्भूते बहू अन्ने ॥ २१२४ ॥

॥ मासकप्पो सम्मत्तो ॥

---

१ °घे य तहा ता० ॥  २ ◁ ▷ एतदन्तर्गतः पाठः मो० ले० पुस्तकयोरेव ॥  ३ यत आह मो० ले० विना ॥

न तरीतुं शक्यत इति 'अतरः' रत्नाकरः, स यथा बहुविधेषु रत्नेषु निष्काश्यमानेष्वपि नैव 'नीरत्नः' रत्नविरहितः कर्तुं शक्यते, कुतः ? इत्याह—यतः 'उत्पत्तिः' आकरोऽसौ रत्नानाम् । "इय" अनेनैव प्रकारेण गच्छरत्नाकरोऽपि रत्नसदृक्षेषु जिनकल्पिकादिषु विनिर्गतेष्वपि नैव नीरत्नो जायते, आचार्यादिरत्नानां सर्वदैव तत्र सद्भावात्, करोति च पश्चादपि बहूनन्यान् साधून् रत्नभूतानिति गच्छो जिनकल्पिकश्च उभावपि महर्द्धिकौ इति ॥ २१२३ ॥ २१२४ ॥

॥ मासकल्पप्रकृतं समाप्तम् ॥

चूर्णि-श्रीवृद्धभाष्यप्रभृतिबहुतिथग्रन्थसार्थाभिरामा-
ऽऽरामैरादर्थप्रसूनैरुचितमवचितैः सूक्तिसौरभ्यसारैः ।
चेतःपट्टे निधाय स्वगुरुशुचिवचस्तन्तुसन्तानदृब्धैः,
श्रीकल्पे मासकल्पप्रकृतविवरणस्रग् मर्था निर्मितेयम् ॥

॥ ग्रन्थाग्रम्– १५६०० मूलतः ॥

## ॥ इति श्रीकल्पे प्रथमः खण्डः समाप्तः ॥

---

१ °म् । 'इति' अमुना प्रका° भा० ॥ २ °हुविधप्र° मो० ले० कां० ॥ ३ °माद् वाक्यप्र° मो० ले० ॥ ४ °नैस्त्वरितप्र° त० डे० कां० ॥ ५ °न्तुभिर्गुम्फितेयं, मो० ले० विना ॥ ६ °था भव्ययोग्या त० डे० कां० ॥

॥ अर्हम् ॥

## श्रीआत्मानन्दजैनग्रन्थरत्नमालायामद्यावधि मुद्रितानां ग्रन्थानां सूची ।

| ग्रन्थनाम | मूल्यम् |
|---|---|
| × १ समवसरणस्तवः—तपाआचार्यश्रीधर्मघोषसूरिप्रणीतः सावचूरिकः | ०—१—० |
| × २ क्षुल्लकभवावलिप्रकरणम्—श्रीधर्मशेखरगणिगुम्फितं सावचूरिकम् | ०—१—० |
| × ३ लोकनालिद्वात्रिंशिकाप्रकरणम्—तपाश्रीधर्मघोषसूरिसूत्रितं सावचूरिकम् | ०—२—० |
| × ४ योनिस्तवः—तपाश्रीधर्मघोषसूरिविरचितः सावचूरिकः | ०—१—० |
| × ५ कालसप्ततिकाप्रकरणम्—तपाश्रीमद्धर्मघोषाचार्यनिर्मितं सटीकम् | ०—१—६ |
| × ६ देहस्थितिस्तवः—तपाश्रीधर्मघोषसूरिविहितः सावचूरिकः लघ्वल्पबहुत्वप्रकरणं सटीकं च | ०—१—० |
| × ७ सिद्धदण्डिकाप्रकरणम्—तपाश्रीमद्देवेन्द्रसूरिसंदृब्धं सावचूरिकम् | ०—१—० |
| × ८ कायस्थितिस्तोत्रम्—तपाश्रीकुलमण्डनसूरिसंसूत्रितं सावचूरिकम् | ०—२—० |
| × ९ भावप्रकरणम्—श्रीविजयविमलगणिविनिर्मितं स्वोपज्ञावचूर्ण्या समलङ्कृतम् | ०—२—० |
| ×१० नवतत्त्वप्रकरणम्—उपकेशगच्छीयाचार्यश्रीदेवगुप्तसूरिविहितं नवाङ्गी-वृत्तिकारश्रीमदभयदेवाचार्यप्रणीतेन भाष्येण श्रीयशोदेवोपाध्यायसूत्रितेन विवरणेन च विभूषितम् नवतत्त्वप्रकरणं मूलमात्रं च | ०-१२-० |
| ×११ विचारपञ्चाशिका—श्रीजयविमलगणिगुम्फिता स्वोपज्ञावचूर्या समेता | ०—२—० |
| ×१२ परमाणुखण्डषट्त्रिंशिका पुद्गलषट्त्रिंशिका निगोदषट्त्रिंशिका च—श्रीरत्नसिंहसूरिविहितयाऽवचूर्या सहिता | ०—३—० |
| ×१३ बन्धषट्त्रिंशिका—श्रीविजयविमलगणिप्रणीतयाऽवचूर्या समेता | ०—२—० |
| ×१४ श्रावकव्रतभङ्गप्रकरणं सावचूरिकम्— | |
| ×१५ देववन्दन-गुरुवन्दन-प्रत्याख्यानभाष्यम्—तपाश्रीमद्देवेन्द्रसूरिविहितं तपाश्रीसोमसुन्दरसूरिविनिर्मितयाऽवचूर्योपेतम् | ०—५—० |
| ×१६ सिद्धपञ्चाशिकाप्रकरणम्—तपाश्रीमद्देवेन्द्रसूरिसूत्रितं सावचूरिकम् | ०—२—० |
| ×१७ अन्नायउञ्छकुलकम्—श्रीआनन्दविजयगणिकृतयाऽवचूर्या सहितम् | ०—२—० |
| ×१८ विचारसप्ततिकाप्रकरणम्—श्रीमन्महेन्द्रसूरिसङ्कलितं श्रीविनयकुशल-प्रणीतया वृत्त्या समेतम् | ०—३—० |
| ×१९ अल्पबहुत्वविचारगर्भो महावीरस्तवः—समयसुन्दरगणिगुम्फितया स्वोपज्ञावचूर्योपेतः महादण्डकस्तोत्रं च सावचूरिकम् | ०—२—० |
| ×२० पञ्चसूत्रम्—याकिनीमहत्तरासूनुआचार्यश्रीहरिभद्रविनिर्मितया टीकयोपेतम् | ०—६—० |
| ×२१ जम्बूस्वामिचरितम्—श्रीजयशेखरसूरिप्रणीतं संस्कृतपद्यबन्धनम् | ०—४—० |
| ×२२ रत्नपालनृपकथानकम्—वाचनाचार्यसोममण्डननिर्मितं संस्कृतपद्यबन्धनम् | ०—५—० |
| २३ सूक्तरत्नावली—श्रीमद्विजयसेनसूरिप्रणीता | ०—४—० |
| २४ मेघदूतसमस्यालेखः—श्रीमन्मेघविजयोपाध्यायविनिर्मितः मेघदूतमहा-काव्यचतुर्थचरणसमस्यापूर्तिरूपः | ०—४—० |

| ग्रन्थनाम | मूल्यम् |
|---|---|
| २५ चेतोदूतम्—मेघदूतमहाकाव्यचतुर्थचरणसमस्यापूर्तिरूपम् | ०—४—० |
| ×२६ पर्युषणाष्टाह्निकाद्यदिनत्रयव्याख्यानम्—श्रीविजयलक्ष्मीसूरिप्रणीतम् | ०—६—० |
| ×२७ चम्पकमालाकथा—श्रीमद्भावविजयगणिगुम्फिता संस्कृतपद्यमयी | ०—६—० |
| ×२८ सम्यक्त्वकौमुदी—श्रीमज्जिनहर्षगणिग्रथिता संस्कृतपद्यात्मका | ०-१२-० |
| ×२९ श्राद्धगुणविवरणम्—श्रीजिनमण्डनगणिप्रणीतम् | १—०—० |
| ×३० धर्मरत्नप्रकरणम्—श्रीशान्त्याचार्यप्रणीतं स्वोपज्ञटीकोपेतम् | ०-१२-० |
| ×३१ कल्पसूत्रम्—दशाश्रुतस्कन्धस्याष्टममध्ययनं श्रीमद्विनयविजयोपाध्याय-विरचितया सुबोधिकाख्यया टीकया समेतम् | ०—०—० |
| ×३२ उत्तराध्ययनसूत्रम्—श्रीभावविजयगणिसङ्कलितया वृत्त्योपेतम् | ५—०—० |
| ×३३ उपदेशसप्ततिका—श्रीसोमधर्मगणिप्रणीता | ०-१३-० |
| ×३४ कुमारपालप्रबन्धः—श्रीमज्जिनमण्डनगणिप्रणीतो गद्यपद्यबन्धः | १—०—० |
| ×३५ आचारोपदेशः—श्रीमच्चारित्रसुन्दरगणिविनिर्मितः | ०—३—० |
| ×३६ रोहिण्यशोकचन्द्रकथा— | ०—२—० |
| ×३७ गुरुगुणषट्त्रिंशत्षट्त्रिंशिकाकुलकम्—श्रीरत्नशेखरसूरिप्रणीतं स्वोपज्ञ-दीपिकाख्यया व्याख्यया युतम् | ०-१०-० |
| ×३८ ज्ञानसाराष्टकानि—न्यायविशारद-न्यायाचार्यश्रीमद्यशोविजयोपाध्याय-विहितानि श्रीमद्देवचन्द्रजिद्भिर्निर्मितया ज्ञानमञ्जर्याख्यया व्याख्ययोपेतानि | १—४—० |
| ×३९ समयसारप्रकरणम्—श्रीमद्देवानन्दाचार्यप्रणीतं स्वोपज्ञटीकासमलङ्कृतम् नवतत्त्वस्वरूपवर्णनात्मकम् समयसारप्रकरणमूलं च | ०-१०-० |
| ×४० सुकृतसागरमहाकाव्यम्—श्रीरत्नमण्डनविनिर्मितं पेथडझाञ्झणचरितम् | ०-१२-० |
| ×४१ धम्मिल्लकथा— | ०—२—० |
| ×४२ प्रतिमाशतकम्—न्यायविशारदन्यायाचार्यश्रीमद्यशोविजयोपाध्यायविहितं श्रीभावप्रभसूरिकृतया टीकया सहितम् | ०—८—० |
| ×४३ धन्यकथानकम्—श्रीदयावर्धनप्रणीतं संस्कृतपद्यात्मकम् | ०—२—० |
| ×४४ चतुर्विंशतिजिनस्तुतिसङ्ग्रहः—श्रीशीलरत्नसूरिविनिर्मितः | ०—६—० |
| ×४५ रौहिणेयकथानकम्— | ०—२—० |
| ×४६ लघुक्षेत्रसमासप्रकरणम्—श्रीरत्नशेखरसूरिप्रणीतं स्वोपज्ञटीकोपेतम् | १—०—० |
| ×४७ बृहत्सङ्ग्रहणी—श्रीमज्जिनभद्रगणिक्षमाश्रमणप्रणीता आचार्यश्रीमलयगिरि-पूज्यविहितया टीकया समेता बृहत्सङ्ग्रहणीमूलं च | २—८—० |
| ×४८ श्राद्धविधिः—श्रीरत्नशेखरसूरिसूत्रितः स्वोपज्ञवृत्तियुतः | २—७—० |
| ×४९ षड्दर्शनसमुच्चयः—श्रीहरिभद्रसूरिप्रणीतः श्रीगुणरत्नसूरिकृतया टीकयोपेतः | ३—०—० |
| ×५० पञ्चसङ्ग्रहः—श्रीचन्द्रर्षिमहत्तरसूत्रितः श्रीमलयगिरिप्रणीतया टीकया सहितः | ३—८—० |
| ×५१ सुकृतसङ्कीर्तनमहाकाव्यम्—पण्डितश्रीअरिसिंहविरचितं प्रतिसर्गं श्रीअमर-चन्द्रकविविनिर्मितश्लोकचतुष्कयुतं महामात्यश्रीवस्तुपालतेजःपालचरितात्मकम् | ०—८—० |

ग्रन्थनाम मूल्यम्

×५२ चत्वारः प्राचीनाः कर्मग्रन्थाः— २–८–०

१ कर्मविपाकः—गर्गर्षिमहर्षिप्रणीतः पूर्वाचार्यप्रणीतया व्याख्यया श्रीपरमानन्दसूरिसूत्रितया टीकया चोपेतः

२ कर्मस्तवः—श्रीगोविन्दाचार्यविरचितया टीकयोपेतः

३ बन्धस्वामित्वम्—बृहद्गच्छीयाचार्यहरिभद्रकृतया टीकया समेतम्

४ आगमिकवस्तुविचारसारप्रकरणम्—षडशीतिरित्यपरनामकं श्रीमज्जिनवल्लभगणिप्रणीतम् आचार्यश्रीमलयगिरिपादविहितया बृहद्गच्छीयाचार्यहरिभद्रकृतया च टीकया सहितम् चत्वारः कर्मग्रन्था मूलमात्राः कर्मस्तवभाष्यद्वयं षडशीतिभाष्यं च

×५३ सम्बोधसप्ततिका—नागपुरीयतपागच्छीयश्रीरत्नशेखरसूरिसङ्कलिता श्रीगुणविनयवाचकप्रणीतया व्याख्यया समलङ्कृता ०–१०–०

×५४ कुवलयमालाकथा—श्रीरत्नप्रभसूरिप्रणीता आचार्यदाक्षिण्याङ्कसूत्रितप्राकृतकथानुसारिणीसंस्कृतभाषात्मका गद्यपद्यमयी १–८–०

×५५ सामाचारीप्रकरणम् आराधकविराधकचतुर्भङ्गीप्रकरणं च—एतद्द्वयमपि न्यायविशारदन्यायाचार्यश्रीमद्यशोविजयोपाध्यायविनिर्मितं स्वोपज्ञटीकोपेतम् ०–८–०

×५६ करुणावज्रायुधं नाटकम्—श्रीबालचन्द्रसूरिप्रणीतम् ०–४–०

×५७ कुमारपालचरित्रमहाकाव्यम्—श्रीचारित्रसुन्दरगणिप्रणीतं संस्कृतपद्यमयम् ०–८–०

×५८ महावीरचरियं—श्रीनेमिचन्द्रसूरिविनिर्मितं प्राकृतं पद्यबन्धं च १–०–०

×५९ कौमुदीमित्राणन्दरूपकम्—प्रबन्धशतकर्तृश्रीरामचन्द्रसूरिप्रणीतम् ०–६–०

×६० प्रबुद्धरौहिणेयं नाटकम्—श्रीरामभद्रसूरिसूत्रितं प्रकरणम् ०–५–०

×६१ धर्माभ्युदयं छायानाटकं सूक्तावली च—एतद्वितयमपि श्रीमेघप्रभाचार्यकृतम् ०–४–०

×६२ पञ्चनिर्ग्रन्थीप्रकरणं प्रज्ञापनोपाङ्गतृतीयपदसङ्ग्रहणी च—एतद्वितयमपि नवाङ्गीवृत्तिकारश्रीमदभयदेवाचार्यसंसूत्रितं सावचूरिकम् ०–६–०

×६३ रयणसेहरीकहा—श्रीजिनहर्षगणिप्रणीता प्राकृतभाषामयी गद्यपद्यात्मका ०–६–०

६४ सिद्धप्राभृतं सटीकम्— ०–१०–०

×६५ दानप्रदीपः—महोपाध्यायश्रीचारित्ररत्नगणिगुम्फितः संस्कृतपद्यात्मकः २–०–०

×६६ बन्धहेतूदयत्रिभङ्ग्यादीनि प्रकरणानि सटीकानि ०–१०–०

१ बन्धहेतूदयत्रिभङ्गीप्रकरणम्—श्रीहर्षकुलगणिप्रणीतं श्रीविजयविमलगणिविरचितविवरणोपेतम्

२ जघन्योत्कृष्टपदे एककालं गुणस्थानकेषु बन्धहेतुप्रकरणं सटीकम्

३ चतुर्दशजीवस्थानेषु जघन्योत्कृष्टपदे युगपद्बन्धहेतुप्रकरणं सटीकम्

४ बन्धोदयसत्ताप्रकरणम्—श्रीमद्विजयविमलगणिविहितं सावचूरिकम्

६७ धर्मपरीक्षा—श्रीजिनमण्डनगणिप्रणीता १–०–०

×६८ सप्ततिशतस्थानकप्रकरणम्—बृहत्तपागच्छीयश्रीसोमतिलकसूरिनिर्मितं राजसूरिगच्छीयश्रीदेवविजयविरचितया वृत्त्या समेतम् १–०–०

| ग्रन्थनाम | मूल्यम् |
| --- | --- |
| ६९ **चेइयवंदणमहाभासं**—श्रीशान्त्याचार्यप्रणीतं सङ्घाचारापरनामकम् | १-१२-० |
| ७० **प्रश्नपद्धतिः**—नवाङ्गवृत्तिकारश्रीमदभयदेवाचार्यशिष्यश्रीहरिचन्द्रगणिविरचिता | ०-२-० |
| ×७१ **कल्पसूत्रम्**—दशाश्रुतस्कन्धस्याष्टममध्ययनं श्रीधर्मसागरोपाध्यायसूत्रितया किरणावल्याख्यया टीकया सहितम् | ०-०-० |
| ७२ **योगदर्शनम्**—महर्षिपतञ्जलिप्रणीतं श्रीमद्यशोविजयोपाध्यायायकृतया वृत्त्योपेतं **योगविंशिका च**—आचार्यहरिभद्रविनिर्मिता न्यायविशारदोपाध्याय श्रीयशोविजयगणिगुम्फितया टीकया युता | १-८-० |
| ७३ **मण्डलप्रकरणम्**—विनयकुशलप्रणीतं स्वोपज्ञवृत्तिसहितम् | ०-६-० |
| ७४ **देवेन्द्रप्रकरणं नरकेन्द्रकप्रकरणं च**—एतत्प्रकरणयुग्मं मुनिचन्द्रसूरिसूत्रितया वृत्त्या समेतम् | ०-१२-० |
| ७५ **चन्द्रवीरशुभा-धनधर्म-सिद्धदत्तकपिल-सुमुखनृपादिमित्रचतुष्केतिकथाचतुष्टयम्**—तपागच्छालङ्कारश्रीमुनिसुन्दरसूरिप्रणीतं संस्कृतपद्यात्मकम् | ०-११-० |
| ७६ **जैनमेघदूतकाव्यम्**—अञ्चलगच्छीयाचार्यश्रीमेरुतुङ्गप्रणीतं श्रीशीलरत्नसूरिविहितटीकोपेतम् | २-०-० |
| ७७ **श्रावकधर्मविधिप्रकरणम्**—हरिभद्रसूरिकृतं मानदेवसूरिकृतवृत्त्युपेतम् | ०-८-० |
| ७८ **गुरुतत्त्वविनिश्चयः**—न्यायविशारदन्यायाचार्यश्रीमद्यशोविजयोपाध्यायविनिर्मितः स्वोपज्ञटीकोपेतः | ३-०-० |
| ७९ **ऐन्द्रस्तुतिचतुर्विंशतिका**—न्यायाचार्यश्रीयशोविजयोपाध्यायविरचिता स्वोपज्ञविवरणयुता **परमज्योतिःपञ्चविंशतिका परमात्मपञ्चविंशतिका श्रीविजयप्रभस्वाध्यायं ऋषभदेवस्तवनं च** | ०-४-० |
| ८० **वसुदेवहिण्डिप्रथमखण्डम्**—श्रीसङ्घदासवाचकविरचितम्, प्राकृतसाहित्यस्यापूर्वः प्राचीनतरोऽयं ग्रन्थः, वसुदेवपरिभ्रमणेतिवृत्तगर्भितः, प्रथमोंऽशः | ३-८-० |
| ८१ **वसुदेवहिण्डिप्रथमखण्डम्**—श्रीसङ्घदासगणिवाचकविरचितः द्वितीयोंऽशः | ३-८-० |
| ८२ **बृहत्कल्पसूत्रम्**—श्रुतकेवलिस्थविरार्यभद्रबाहुस्वामिप्रणीतं स्वोपज्ञनिर्युक्त्युपेतं श्रीसङ्घदासगणिविनिर्मितेन भाष्येण युतं आचार्यश्रीमलयगिरिपादविहितयाऽर्धपीठिकावृत्त्या तपाश्रीक्षेमकीर्तिसूरिसूत्रितया शेषसमग्रवृत्त्या समेतम् तस्यायं पीठिकारूपः प्रथमोंऽशः | |
| ८३ **बृहत्कल्पसूत्रम्**—सनिर्युक्तिभाष्यवृत्तिकम् तस्यायं प्रथमोद्देशकः प्रलम्बप्रकृत-मासकल्पप्रकृतात्मको द्वितीयोंऽशः | |
| ८४ **नव्यकर्मग्रन्थचतुष्टयम्**—श्रीमद्देवेन्द्रसूरिप्रणीतं स्वोपज्ञटीकोपेतम् | |

× एतच्चिह्नाङ्किता ग्रन्थाः सम्प्रति न विद्यन्ते ।

**मुद्र्यमाणा ग्रन्थाः**

**बृहत्कल्पसूत्रम्**—सनिर्युक्तिभाष्यवृत्तिकम् तृतीयोंऽशः

**वसुदेवहिण्डिद्वितीयखण्डम्**—श्रीधर्मसेनगणिमहत्तरविनिर्मितम् मध्यमखण्डापरनामकम् प्रथमोंऽशः